## नारायणीयम्

ॐ नमो भगवते वासुदेवाय ।

ॐ नमो नारायणाय ।

### पारायणसङ्कल्पम्

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

नारायण नारायण नारायण नारायण ।

नारायण नारायण नारायण नारायण ॥

### ध्यानम्

पीताम्बरं करविराजितशङ्खचक्रकौमोदकीसरसिजं करुणासमुद्रम् ।

राधासहायमतिसुन्दरमन्दहासं वातालयेशमनिशं हृदि भावयामि ॥

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।

यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।

यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥

कोमळं कूजयन् वेणुं श्यामळोऽयं कुमारकः ।

वेदवेद्यं परं ब्रह्म भासतां पुरतो मम ॥

ध्यानश्लोकानि

ॐ नमःश्रीगणेशशारदागुरुभ्यो नमः । अविघ्नमस्तु ।

अगजाननपद्मार्कं गजाननमहर्निशम् ।

अनेकदन्तं भक्तानामेकदन्तमुपास्महे ॥

श्रीमहागणपतये नमः ।

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।

निधये सर्वविद्यानां श्रीदक्षिणामूर्तये नमः ॥

अस्मद्गुरुचरणारविन्दाभ्यां नमः ।

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।

आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

श्रीहयग्रीवमूर्तये नमः ।

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।

विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥

श्रीमहासरस्वत्यै नमः ।

उमाकोमळहस्ताब्जसम्भावितललाटकम् ।
हिरण्यकुण्डलं वन्दे कुमारं पुष्कलस्रजम् ॥

शक्तिधरश्रीसुब्रह्मण्यस्वामिने नमः ।

भूतनाथ सदानन्द सर्वभूतदयापर ।
रक्ष रक्ष महाबाहो शास्त्रे तुभ्यं नमो नमः ॥

स्वामि श्रीशबरीशशास्तारं शरणं गच्छामि ।

कोमळं कूजयन् वेणुं श्यामळोऽयं कुमारकः ।
वेदवेद्यं परं ब्रह्म भासतां पुरतो मम ॥

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैः
वेदैस्साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेनमनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सरासुरगणाः देवाय तस्मै नमः ॥

कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥

सायङ्काले वनान्ते कुसुमितसमये सैकतैश्चन्द्रिकायां
त्रैलोक्याकर्षणाङ्गं सुरवरगणिकामोहनापाङ्गमूर्तिम् ।
सेव्यं शृङ्गारभावैर्नवरसभरितैर्गोपकन्यासहस्रैः
वन्देऽहं रासकेळीरतमतिसुभगं वश्यगोपालकृष्णम् ॥

आनीलश्लक्ष्णकेशं ज्वलितमकरसत्कुण्डलं मन्दहास-
स्यन्दार्द्रं कौस्तुभश्रीपरिगतवनमालोरुहाराभिरामम् ।
श्रीवत्साङ्कं सुबाहुं मृदुलसदुदरं काञ्चनच्छायचेलं
चारुस्निग्धोरुमम्भोरुहललितपदं भावयेयं भवन्तम् ॥

श्रीकृष्ण गोविन्द हरे मुरारे श्रीनाथ नारायण वासुदेव ॥ - (त्रिवारम्)

सर्वत्र गोविन्दनामसङ्कीर्तनं - गोविन्द गोविन्द गोविन्द ।

मोक्षाब्धिसारमयभागवताख्यदध्नो
नारायणीयनवनीतमहो गृहीत्वा ।
मायामयौघपरितप्तजनाय योगात्
नारायणायावनिसुराय नमोऽस्तु तस्मै ॥

गङ्गा गीता च गायत्र्यपि च तुलसिका गोपिकाचन्दनं तत्
सालग्रामाभिपूजा परपुरुष तथैकादशी नामवर्णाः ।
एतान्यष्टाप्ययत्नान्ययि कलिसमये त्वत्प्रसादप्रवृद्ध्या
क्षिप्रं मुक्तिप्रदानीत्यभिदधुरृषयस्तेषु मां सज्जयेथाः ॥

सर्वत्र गोविन्दनामसङ्कीर्तनं - गोविन्द गोविन्द गोविन्द ।

# नारायणीयं स्तोत्रम्

मेल्पत्तूर् नारायणभट्टतिरिवर्यविरचितं

श्रीमन्नारायणीयं स्तोत्रम्

## प्रथमदशकम् (१)

भगवतः स्वरूपं तथा माहात्म्यम् ।

1 Form and Glory of the Lord

सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्यां
निर्मुक्तं नित्यमुक्तं निगमशतसहस्रेण निर्भास्यमानम् ।
अस्पष्टं दृष्टमात्रे पुनरुरुपुरुषार्थात्मकं ब्रह्मतत्त्वं
तत्तावद्भाति साक्षाद्गुरुपवनपुरे हन्त भाग्यं जनानाम् ॥ १-१॥

एवं दुर्लभ्यवस्तुन्यपि सुलभतया हस्तलब्धे यदन्यत्
तन्वा वाचा धिया वा भजति बत जनः क्षुद्रतैव स्फुटेयम् ।
एते तावद्वयं तु स्थिरतरमनसा विश्वपीडापहत्यै
निश्शेषात्मानमेनं गुरुपवनपुराधीशमेवाश्रयामः ॥ १-२॥

सत्त्वं यत्तत्पुराभ्यामपरिकलनतो निर्मलं तेन तावद्-

भूतैर्भूतेन्द्रियैस्ते वपुरिति बहुशः श्रूयते व्यासवाक्यम् ।

तत्स्वच्छत्वाद्यदच्छादितपरसुखचिद्गर्भनिर्भासरूपं

तस्मिन् धन्या रमन्ते श्रुतिमतिमधुरे सुग्रहे विग्रहे ते ॥ १-३॥

निष्कम्पे नित्यपूर्णे निरवधि परमानन्दपीयूषरूपे

निर्लीनानेकमुक्तावलिसुभगतमे निर्मलब्रह्मसिन्धौ ।

कल्लोलोल्लासतुल्यं खलु विमलतरं सत्त्वमाहुस्तदात्मा

कस्मान्नो निष्कलस्त्वं सकल इति वचस्त्वत्कलास्वेव भूमन् ॥ १-४॥

निर्व्यापारोऽपि निष्कारणमज भजसे यत्क्रियामीक्षणाख्यां

तेनैवोदेति लीना प्रकृतिरसतिकल्पाऽपि कल्पादिकाले ।

तस्याः संशुद्धमंशं कमपि तमतिरोधायकं सत्त्वरूपं

स त्वं धृत्वा दधासि स्वमहिमविभवाकुण्ठ वैकुण्ठरूपम् ॥ १-५॥

तत्ते प्रत्यग्रधाराधरललितकलायावलीकेलिकारं

लावण्यस्यैकसारं सुकृतिजनदृशां पूर्णपुण्यावतारम् ।

लक्ष्मीनिश्शङ्कलीलानिलयनममृतस्यन्दसन्दोहमन्तः

सिञ्चत्सञ्चिन्तकानां वपुरनुकलये मारुतागारनाथ ॥ १-६॥

कष्टा ते सृष्टिचेष्टा बहुतरभवखेदावहा जीवभाजा-

मित्येवं पूर्वमालोचितमजित मया नैवमद्याभिजाने ।

नो चेज्जीवाः कथं वा मधुरतरमिदं त्वद्वपुश्चिद्रसार्द्रं

नेत्रैः श्रोत्रैश्च पीत्वा परमरससुधाम्भोधिपूरे रमेरन् ॥ १-७॥

नम्राणां सन्निधत्ते सततमपि पुरस्तैरनभ्यार्थितान-
प्यर्थान् कामानजस्रं वितरति परमानन्दसान्द्रां गतिं च ।
इत्थं निश्शेषलभ्यो निरवधिकफलः पारिजातो हरे त्वं
क्षुद्रं तं शक्रवाटीद्रुममभिलषति व्यर्थमर्थिव्रजोऽयम् ॥ १-८॥

कारुण्यात्काममन्यं ददति खलु परे स्वात्मदस्त्वं विशेषा-
दैश्वर्यादीशतेऽन्ये जगति परजने स्वात्मनोऽपीश्वरस्त्वम् ।
त्वय्युच्चैरारमन्ति प्रतिपदमधुरे चेतनाः स्फीतभाग्यास्-
त्वं चात्माराम एवेत्यतुलगुणगणाधार शौरे नमस्ते ॥ १-९॥

ऐश्वर्यं शङ्करादीश्वरविनियमनं विश्वतेजोहराणां
तेजस्संहारि वीर्यं विमलमपि यशो निस्पृहैश्चोपगीतम् ।
अङ्गासङ्गा सदा श्रीरखिलविदसि न क्वापि ते सङ्गवार्ता
तद्वातागारवासिन् मुरहर भगवच्छब्दमुख्याश्रयोऽसि ॥ १-१०॥

इति प्रथमदशकं समाप्तम् ।

## द्वितीयदशकम् (२)

भगवतः स्वरूपमाधुर्यं तथा भक्तिमहत्त्वम् ।

2 Form of the Lord And Greatness of Devotion

सूर्यस्पर्धिकिरीटमूर्ध्वतिलकप्रोद्भासिफालान्तरं
कारुण्याकुलनेत्रमार्द्रहसितोल्लासं सुनासापुटम् ।
गण्डोद्यन्मकराभकुण्डलयुगं कण्ठोज्ज्वलत्कौस्तुभं
त्वद्रूपं वनमाल्यहारपटलश्रीवत्सदीप्रं भजे ॥ २-१॥

केयूराङ्गदकङ्कणोत्तममहारत्नाङ्गुलीयाङ्कित-
श्रीमद्बाहुचतुष्कसङ्गतगदाशङ्खारिपङ्केरुहाम् ।
काञ्चित्काञ्चिनकाञ्चिलाञ्छितलसत्पीताम्बरालम्बिनी-
मालम्बे विमलाम्बुजद्युतिपदां मूर्तिं तवार्तिच्छिदम् ॥ २-२॥

यत्त्रैलोक्यमहीयसोऽपि महितं सम्मोहनं मोहनात्
कान्तं कान्तिनिधानतोऽपि मधुरं माधुर्यधुर्यादपि ।
सौन्दर्योत्तरतोऽपि सुन्दरतरं त्वद्रूपमाश्चर्यतोऽ-
प्याश्चर्यं भुवने न कस्य कुतुकं पुष्णाति विष्णो विभो ॥ २-३॥

तत्तादृङ्मधुरात्मकं तव वपुः सम्प्राप्य सम्पन्मयी
सा देवी परमोत्सुका चिरतरं नाऽस्ते स्वभक्तेष्वपि ।
तेनास्या बत कष्टमच्युत विभो त्वद्रूपमानोज्ञक-
प्रेमस्थैर्यमयादचापलबलाच्चापल्यवार्तोदभूत् ॥ २-४॥

लक्ष्मीस्तावकरामणीयकहृतैवेयं परेष्वस्थिरे-
त्यस्मिन्नन्यदपि प्रमाणमधुना वक्ष्यामि लक्ष्मीपते ।
ये त्वद्ध्यानगुणानुकीर्तनरसासक्ता हि भक्ता जना-

स्तेष्वेषा वसति स्थिरैव दयितप्रस्तावदत्तादरा ॥ २-५॥

एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनं
त्वद्रूपं परचिद्रसायनमयं चेतोहरं शृण्वताम् ।
सद्यः प्रेरयते मतिं मदयते रोमाञ्चयत्यङ्गकं
व्यासिञ्चत्यपि शीतबाष्पविसरैरानन्दमूर्च्छोद्भवैः ॥ २-६॥

एवम्भूततया हि भक्त्यभिहितो योगः स योगद्वयात्
कर्मज्ञानमयाद्भृशोत्तमतरो योगीश्वरैर्गीयते ।
सौन्दर्यैकरसात्मके त्वयि खलु प्रेमप्रकर्षात्मिका
भक्तिर्निश्रममेव विश्वपुरुषैर्लभ्या रमावल्लभ ॥ ७॥

निष्कामं नियतस्वधर्मचरणं यत्कर्मयोगाभिधं
तद्दूरेत्यफलं यदौपनिषदज्ञानोपलभ्यं पुनः ।
तत्त्वव्यक्ततया सुदुर्गमतरं चित्तस्य तस्माद्विभो
त्वत्प्रेमात्मकभक्तिरेव सततं स्वदीयसी श्रेयसी ॥ २-८॥

अत्यायासकराणि कर्मपटलान्याचर्य निर्यन्मला
बोधे भक्तिपथेऽथवाप्युचिततामायान्ति किं तावता ।
क्लिष्ट्वा तर्कपथे परं तव वपुर्ब्रह्माख्यमन्ये पुन-
श्चित्तार्द्रत्वमृते विचिन्त्य बहुभिः सिध्यन्ति जन्मान्तरैः ॥ २-९॥

त्वद्भक्तिस्तु कथारसामृतझरीनिर्मज्जनेन स्वयं

सिद्ध्यन्ती विमलप्रबोधपदवीमक्लेशतस्तन्वती ।१
सद्यः सिद्धिकरी जयत्ययि विभो सैवास्तु मे त्वत्पद-
प्रेमप्रौढिरसार्द्रता द्रुततरं वातालयाधीश्वर ॥ २-१०॥

इति द्वितीयदशकं समाप्तम् ।

## तृतीयदशकम् (३)

### उत्तमभक्तस्य गुणाः ।

### 3 The Qualities of the Perfect Devotee

पठन्तो नामानि प्रमदभरसिन्धौ निपतिताः
स्मरन्तो रूपं ते वरद कथयन्तो गुणकथाः ।
चरन्तो ये भक्तास्त्वयि खलु रमन्ते परममू-
नहं धन्यान्मन्ये समधिगतसर्वाभिलषितान् ॥ ३-१॥

गदक्लिष्टं कष्टं तव चरणसेवारसभरेऽ-
प्यनासक्तं चित्तं भवति बत विष्णो कुरु दयाम् ।
भवत्पादाम्भोजस्मरणरसिको नामनिवहा-
नहं गायं गायं कुहचन विवत्स्यामि विजने ॥ ३-२॥

कृपा ते जाता चेत्किमिव न हि लभ्यं तनुभृतां
मदीयक्लेशौघप्रशमनदशा नाम कियती ।

न के के लोकेऽस्मिन्ननिशमयि शोकाभिरहिता
भवद्भक्ता मुक्ताः सुखगतिमसक्ता विदधते ॥ ३-३॥

मुनिप्रौढा रूढा जगति खलु गूढात्मगतयो
भवत्पादाम्भोजस्मरणविरुजो नारदमुखाः ।
चरन्तीश स्वैरं सततपरिनिर्भातपरचित्-
सदानन्दाद्वैतप्रसरपरिमग्नाः किमपरम् ॥ ३-४॥

भवद्भक्तिः स्फीता भवतु मम सैव प्रशमये-
दशेषक्लेशौघं न खलु हृदि सन्देहकणिका ।
न चेद्व्यासस्योक्तिस्तव च वचनं नैगमवचो
भवेन्मिथ्या रथ्यापुरुषवचनप्रायमखिलम् ॥ ३-५॥

भवद्भक्तिस्तावत्प्रमुखमधुरा त्वद्गुणरसात्२
किमप्यारूढा चेदखिलपरितापप्रशमनी ।
पुनश्चान्ते स्वान्ते विमलपरिबोधोदयमिल-
न्महानन्दाद्वैतं दिशति किमतः प्रार्थ्यमपरम् ॥ ३-६॥

विधूय क्लेशान्मे कुरु चरणयुग्मं धृतरसं
भवत्क्षेत्रप्राप्तौ करमपि च ते पूजनविधौ ।
भवन्मूर्त्यालोके नयनमथ ते पादतुलसी-
परिघ्राणे घ्राणं श्रवणमपि ते चारुचरिते ॥ ३-७॥

प्रभूताधिव्याधिप्रसभचलिते मामकहृदि

त्वदीयं तद्रूपं परमसुखचिद्रूपमुदियात् ।

उदञ्चद्रोमाञ्चो गलितबहुहर्षाश्रुनिवहो

यथा विस्मर्यासं दुरुपशमपीडापरिभवान् ॥ ३-८॥

मरुद्गेहाधीश त्वयि खलु पराञ्चोऽपि सुखिनो

भवत्स्नेही सोऽहं सुबहु परितप्ये च किमिदम् ।

अकीर्तिस्ते मा भूद्वरद गदभारं प्रशमयन्

भवद्भक्तोत्तंसं झटिति कुरु मां कंसदमन ॥ ३-९॥

किमुक्तैर्भूयोभिस्तव हि करुणा यावदुदिया-

दहं तावद्देव प्रहितविविधार्तप्रलपितः ।

पुरः क्लृप्ते पादे वरद तव नेष्यामि दिवसान्

यथाशक्ति व्यक्तं नतिनुतिनिषेवा विरचयन् ॥ ३-१०॥

इति तृतीयदशकं समाप्तम् ।

## चतुर्थदशकम् (४)

### योगाभ्यासः तथा योगसिद्धिः ।

### 4 Yoga And Its Attainment

कल्यतां मम कुरुष्व तावतीं कल्यते भवदुपासनं यया ।

स्पष्टमष्टविधयोगचर्यया पुष्टयाऽऽशु तव तुष्टिमाप्नुयाम् ॥ ४-१॥

ब्रह्मचर्यदृढतादिभिर्यमैराप्लवादिनियमैश्च पाविताः ।
कुर्महे दृढममी सुखासनं पङ्कजाद्यमपि वा भवत्पराः ॥ ४-२॥

तारमन्तरनुचिन्त्य सन्ततं प्राणवायुमभियम्य निर्मलाः ।
इन्द्रियाणि विषयादथापहृत्यास्महे भवदुपासनोन्मुखाः ॥ ४-३॥

अस्फुटे वपुषि ते प्रयत्नतो धारयेम धिषणां मुहुर्मुहुः ।
तेन भक्तिरसमन्तरार्द्रतामुद्वहेम भवदङ्घ्रिचिन्तकाः ॥ ४-४॥

विस्फुटावयवभेदसुन्दरं त्वद्वपुस्सुचिरशीलनावशात् ।
अश्रमं मनसि चिन्तयामहे ध्यानयोगनिरतास्त्वदाश्रयाः ॥ ४-५॥

ध्यायतां सकलमूर्तिमीदृशीमुन्मिषन्मधुरताहृतात्मनाम् ।
सान्द्रमोदरसरूपमान्तरं ब्रह्मरूपमयि तेऽवभासते ॥ ४-६॥

तत्समास्वदनरूपिणीं स्थितिं त्वत्समाधिमयि विश्वनायक ।
आश्रिताः पुनरतः परिच्युतावारभेमहि च धारणाधिकम् ॥ ४-७॥

इत्थमभ्यसननिर्भरोल्लसत्त्वत्परात्मसुखकल्पितोत्सवाः ।
मुक्तभक्तकुलमौलितां गताः सञ्चरेम शुकनारदादिवत् ॥ ४-८॥

त्वत्समाधिविजये तु यः पुनर्मङ्क्षु मोक्षरसिकः क्रमेण वा ।
योगवश्यमनिलं षडाश्रयैरुन्नयत्यज सुषुम्नया शनैः ॥ ४-९॥

लिङ्गदेहमपि सन्त्यजन्नथो लीयते त्वयि परे निराग्रहः ।
ऊर्ध्वलोककुतुकी तु मूर्धतस्सार्धमेव करणैर्निरीयते ॥ ४-१०॥

अग्निवासरवलर्क्षपक्षगैरुत्तरायणजुषा च दैवतैः ।
प्रापितो रविपदं भवत्परो मोदवान् ध्रुवपदान्तमीयते ॥ ४-११॥

आस्थितोऽथ महरालये यदा शेषवक्त्रदहनोष्मणार्द्यते ।
ईयते भवदुपाश्रयस्तदा वेधसः पदमतः पुरैव वा ॥ ४-१२॥

तत्र वा तव पदेऽथवा वसन् प्राकृतप्रलय एति मुक्तताम् ।
स्वेच्छया खलु पुराऽपि मुच्यते संविभिद्य जगदण्डमोजसा ॥ ४-१३॥

तस्य च क्षितिपयोमहोऽनिलद्योमहत्प्रकृतिसप्तकावृतीः ।
तत्तदात्मकतया विशन् सुखी याति ते पदमनावृतं विभो ॥ ४-१४॥

अर्चिरादिगतिमीदृशीं व्रजन् विच्युतिं न भजते जगत्पते ।
सच्चिदात्मक भवद्गुणोदयानुच्चरन्तमनिलेश पाहि माम् ॥ ४-१५॥

इति चतुर्थदशकं समाप्तं

## पञ्चमदशकम् (५)

## विराट्-पुरुषोत्पत्तिः ।

## 5 Cosmic Evoluion

व्यक्ताव्यक्तमिदं न किञ्चिदभवत्प्राक्प्राकृतप्रक्षये
मायायां गुणसाम्यरुद्धविकृतौ त्वय्यागतायां लयम् ।
नो मृत्युश्च तदामृतं च समभून्नाह्नो न रात्रेः स्थिति-
स्तत्रैकस्त्वमशिष्यथाः किल परानन्दप्रकाशात्मना ॥ ५-१॥

कालः कर्मगुणाश्च जीवनिवहा विश्वं च कार्यं विभोः
चिल्लीलारतिमेयुषि त्वयि तदा निर्लीनतामाययुः ।
तेषां नैव वदन्त्यसत्वमयि भोः शक्त्यात्मना तिष्टतां
नो चेत् किं गगनप्रसूनसदृशां भूयो भवेत्सम्भवः ॥ ५-२॥

एवं च द्विपरार्धकालविगतावीक्षां सिसृक्षात्मिकां
बिभ्राणे त्वयि चुक्षुभे त्रिभुवनीभावाय माया स्वयम् ।
मायातः खलु कालशक्तिरखिलादृष्टं स्वभावोऽपि च
प्रादुर्भूय गुणान्विकास्य विदधुस्तस्यास्सहायक्रियाम् ॥ ५-३॥

मायासन्निहितोऽप्रविष्टवपुषा साक्षीति गीतो भवान्
भेदैस्तां प्रतिबिम्बितो विविशिवान् जीवोऽपि नैवापरः ।
कालादिप्रतिबोधिताऽथ भवता सञ्चोदिता च स्वयं

माया सा खलु बुद्धितत्त्वमसृजद्योऽसौ महानुच्यते ॥ ५-४॥

तत्रासौ त्रिगुणात्मकोऽपि च महान् सत्त्वप्रधानः स्वयं
जीवेऽस्मिन् खलु निर्विकल्पमहमित्युद्बोधनिष्पादकः ।
चक्रेऽस्मिन् सविकल्पबोधकमहन्तत्त्वं महान् खल्वसौ
सम्पुष्टं त्रिगुणैस्तमोऽतिबहुलं विष्णो भवत्प्रेरणात् ॥ ५-५॥

सोऽहं च त्रिगुणक्रमात्त्रिविधतामासाद्य वैकारिको
भूयस्तैजसतामसाविति भवन्नाद्येन सत्त्वात्मना ।
देवानिन्द्रियमानिनोऽकृत दिशावातार्कपाश्यश्विनो
वह्नीन्द्राच्युतमित्रकान् विधुविधिश्रीरुद्रशारीरकान् ॥ ५-६॥

भूमन्मानसबुद्ध्यहङ्कृतिमिलच्चित्ताख्यवृत्त्यन्वितं
तच्चान्तःकरणं विभो तव बलात्सत्त्वांश एवासृजत् ।
जातस्तैजसतो दशेन्द्रियगणस्तत्तामसांशात्पुन-
स्तन्मात्रं नभसो मरुत्पुरपते शब्दोऽजनि त्वद्बलात् ॥ ५-७॥

शब्दाद्व्योम ततः ससर्जिथ विभो स्पर्शं ततो मारुतं
तस्माद्रूपमतो महोऽथ च रसं तोयं च गन्धं महीम् ।
एवं माधव पूर्वपूर्वकलनादाद्याद्यधर्मान्वितं
भूतग्राममिमं त्वमेव भगवन् प्राकाशयस्तामसात् ॥ ५-८॥

एते भूतगणास्तथेन्द्रियगणा देवाश्च जाता पृथङ्-

नो शेकुर्भुवनाण्डनिर्मितिविधौ देवैरमीभिस्तदा ।

त्वं नानाविधसूक्तिभिर्नुतगुणस्तत्त्वान्यमून्याविशं-

श्चेष्टाशक्तिमुदीर्य तानि घटयन् हैरण्यमण्डं व्यधाः ॥ ५-९॥

अण्डं तत्खलु पूर्वसृष्टसलिलेऽतिष्ठत्सहस्रं समाः

निर्भिन्दन्नकृथाश्चतुर्दशजगद्रूपं विराडाह्वयम् ।

साहस्रैः करपादमूर्धनिवहैर्निश्शेषजीवात्मको

निर्भातोऽसि मरुत्पुराधिप स मां त्रायस्व सर्वामयात् ॥ ५-१०॥

इति पञ्चमदशकं समाप्तम् ।

षष्ठदशकम् (६)

विराट्-स्वरूपवर्णनम् ।

## 6 The Cosmos as the Form of the Lord

एवं चतुर्दशजगन्मयतां गतस्य पातालमीश तव पादतलं वदन्ति ।

पादोर्ध्वदेशमपि देव रसातलं ते गुल्फद्वयं खलु महातलमद्भुतात्मन् ॥ ६-१॥

जङ्घे तलातलमथो सुतलं च जानू किञ्चोरुभागयुगलं वितलातले द्वे ।

क्षोणीतलं जघनमम्बरमङ्ग नाभिर्वक्षश्च शक्रनिलयस्तव चक्रपाणे ॥ ६-२॥

ग्रीवा महस्तव मुखं च जनस्तपस्तु फालं शिरस्तव समस्तमयस्य सत्यम् ।

एवं जगन्मयतनो जगदाश्रितैरप्यन्यैर्निबद्धवपुषे भगवन्नमस्ते ॥ ६-३॥

त्वद्ब्रह्मरन्ध्रपदमीश्वर विश्वकन्द छन्दांसि केशव घनास्तव केशपाशाः ।
उल्लासिचिल्लियुगलं द्रुहिणस्य गेहं पक्ष्माणि रात्रिदिवसौ सविता च नेत्रे ॥ ६-४॥

निश्शेषविश्वरचना च कटाक्षमोक्षः कर्णौ दिशोऽश्वियुगलं तव नासिके द्वे ।
लोभत्रपे च भगवन्नधरोत्तरोष्ठौ तारागणश्च दशनाः शमनश्च दंष्ट्रा ॥ ६-५॥

माया विलासहसितं श्वसितं समीरो जिह्वा जलं वचनमीश शकुन्तपङ्क्तिः ।
सिद्धादयस्स्वरगणा मुखरन्ध्रमग्निर्देवा भुजाः स्तनयुगं तव धर्मदेवः ॥ ६-६॥

पृष्ठं त्वधर्म इह देव मनस्सुधांशुरव्यक्तमेव हृदयाम्बुजमम्बुजाक्ष ।
कुक्षिस्समुद्रनिवहा वसनं तु सन्ध्ये शेफः प्रजापतिरसौ वृषणौ च मित्रः ॥ ६-७॥

श्रोणिस्थलं मृगगणाः पदयोर्नखास्ते हस्त्युष्ट्रसैन्धवमुखा गमनं तु कालः ।
विप्रादिवर्णभवनं वदनाब्जबाहुचारूरुयुग्मचरणं करुणाम्बुधे ते ॥ ६-८॥

संसारचक्रमयि चक्रधर क्रियास्ते वीर्यं महासुरगणोऽस्थिकुलानि शैलाः ।
नाड्यस्सरित्समुदयस्तरवश्च रोम जीयादिदं वपुरनिर्वचनीयमीश ॥ ६-९॥

ईदृग्जगन्मयवपुस्तव कर्मभाजां कर्मावसानसमये स्मरणीयमाहुः ।
तस्यान्तरात्मवपुषे विमलात्मने ते वातालयाधिप नमोऽस्तु निरुन्धि रोगान् ॥ ६-१०॥

इति षष्ठदशकं समाप्तम् ॥

## सप्तमदशकम् (७)

## ब्रह्मणः जन्म, तपः तथा वैकुण्ठदर्शनम् ॥

## 7 Bahma's Origin, Penance And Vision of Vaikuntha

एवं देव चतुर्दशात्मकजगद्रूपेण जातः पुन-
स्तस्योर्ध्वं खलु सत्यलोकनिलये जातोऽसि धाता स्वयम् ।
यं शंसन्ति हिरण्यगर्भमखिलत्रैलोक्यजीवात्मकं
योऽभूत् स्फीतरजोविकारविकसन्नानासिसृक्षारसः ॥ ७-१॥

सोऽयं विश्वविसर्गदत्तहृदयस्सम्पश्यमानस्स्वयं
बोधं खल्वनवाप्य विश्वविषयं चिन्ताकुलस्तस्थिवान् ।
तावत्त्वं जगताम्पते तपतपेत्येवं हि वैहायसीं
वाणीमेनमशिश्रवः श्रुतिसुखां कुर्वंस्तपःप्रेरणाम् ॥ ७-२॥

कोऽसौ मामवदत्पुमानिति जलापूर्णे जगन्मण्डले
दिक्षूद्वीक्ष्य किमप्यनीक्षितवता वाक्यार्थमुत्पश्यता ।
दिव्यं वर्षसहस्रमात्तपसा तेन त्वमाराधित-
स्तस्मै दर्शितवानसि स्वनिलयं वैकुण्ठमेकाद्भुतम् ॥ ७-३॥

माया यत्र कदापि नो विकुरुते भाते जगद्भ्यो बहि-

श्शोकक्रोधविमोहसाध्वसमुखा भावास्तु दूरं गताः ।

सान्द्रानन्दझरी च यत्र परमज्योतिःप्रकाशात्मके

तत्ते धाम विभावितं विजयते वैकुण्ठरूपं विभो ॥ ७-४॥

यस्मिन्नाम चतुर्भुजा हरिमणिश्यामावदातत्विषो

नानाभूषणरत्नदीपितदिशो राजद्विमानालयाः ।

भक्तिप्राप्ततथाविधोन्नतपदा दीव्यन्ति दिव्या जना-

स्तत्ते धाम निरस्तसर्वशमलं वैकुण्ठरूपं जयेत् ॥ ७-५॥

नानादिव्यवधूजनैरभिवृता विद्युल्लतातुल्यया

विश्वोन्मादनहृद्यगात्रलतया विद्योतिताशान्तरा ।

त्वत्पादाम्बुजसौरभैककुतुकाल्लक्ष्मीः स्वयं लक्ष्यते

यस्मिन् विस्मयनीयदिव्यविभवं तत्ते पदं देहि मे ॥ ७-६॥

तत्रैवं प्रतिदर्शिते निजपदे रत्नासनाध्यासितं

भास्वत्कोटिलसत्किरीटकटकाद्याकल्पदीप्राकृति ।

श्रीवत्साङ्कितमात्तकौस्तुभमणिच्छायारुणं कारणं

विश्वेषां तव रूपमैक्षत विधिस्तत्ते विभो भातु मे ॥ ७-७॥

कालाम्भोदकलायकोमलरुचीचक्रेण चक्रं दिशा-

मावृण्वानमुदारमन्दहसितस्यन्दप्रसन्नाननम् ।

राजत्कम्बुगदारिपङ्कजधरश्रीमद्भुजामण्डलं

स्रष्टुस्तुष्टिकरं वपुस्तव विभो मद्रोगमुद्वासयेत् ॥ ७-८॥

दृष्ट्वा सम्भृतसम्भ्रमः कमलभूस्त्वत्पादपाथोरुहे
हर्षावेशवशंवदो निपतितः प्रीत्या कृतार्थीभवन् ।
जानास्येव मनीषितं मम विभो ज्ञानं तदापादय
द्वैताद्वैतभवत्स्वरूपपरमित्याचष्ट तं त्वां भजे ॥ ७-९॥

आताम्रे चरणे विनम्रमथ तं हस्तेन हस्ते स्पृशन्
बोधस्ते भविता न सर्गविधिबिर्बन्धोऽपि सञ्जायते ।
इत्याभाष्य गिरं प्रतोष्य नितरां तच्चित्तगूढः स्वयं
सृष्टौ तं समुदैरयस्स भगवन्नुल्लासयोल्लाघताम् ॥ ७-१०॥

इति सप्तमदशकं समाप्तम् ।

## अष्टमदशकम् (८)

## प्रलयवर्णनम् ।

## 8 Description of Pralaya

एवं तावत्प्राकृतप्रक्षयान्ते ब्राह्मे कल्पे ह्यादिमे लब्धजन्मा ।
ब्रह्मा भूयस्त्वत्त एवाप्य वेदान् सृष्टिं चक्रे पूर्वकल्पोपमानाम् ॥ ८-१॥

सोऽयं चतुर्युगसहस्रमितान्यहानि तावन्मिताश्च रजनीर्बहुशो निनाय ।

निद्रात्यसौ त्वयि निलीय समं स्वसृष्टैर्नैमित्तिकप्रलयमाहुरतोऽस्य रात्रिम् ॥ ८-२॥

अस्मादृशां पुनरहर्मुखकृत्यतुल्यां सृष्टिं करोत्यनुदिनं स भवत्प्रसादात् ।
प्राग्ब्रह्मकल्पजनुषां च परायुषां तु सुप्तप्रबोधनसमाऽस्ति तदाऽपि सृष्टिः ॥ ८-३॥

पञ्चाशदब्दमधुना स्ववयोऽर्धरूपमेकं परार्धमतिवृत्य हि वर्ततेऽसौ ।
तत्रान्त्यरात्रिजनितान्कथयामि भूमन् पश्चाद्दिनावतरणे च भवद्विलासान् ॥ ८-४॥

दिनावसानेऽथ सरोजयोनिः सुषुप्तिकामस्त्वयि सन्निलिल्ये ।
जगन्ति च त्वज्जठरं समीयुस्तदेदमेकार्णवमास विश्वम् ॥ ८-५॥

तवैव वेषे फणिराजि शेषे जलैकशेषे भुवने स्म शेषे ।
आनन्दसान्द्रानुभवस्वरूपः स्वयोगनिद्रापरिमुद्रितात्मा ॥ ८-६॥

कालाख्यशक्तिं प्रलयावसाने प्रबोधयेत्यादिशता किलादौ ।
त्वया प्रसुप्तं परिसुप्तशक्तिव्रजेन तत्राखिलजीवधाम्ना ॥ ८-७॥

चतुर्युगाणां च सहस्रमेवं त्वयि प्रसुप्ते पुनरद्वितीये ।
कालाख्यशक्तिः प्रथमप्रबुद्धा प्राबोधयत्त्वां किल विश्वनाथ ॥ ८-८॥

विबुध्य च त्वं जलगर्भशायिन् विलोक्य लोकानखिलान्प्रलीनान् ।
तेष्वेव सूक्ष्मात्मतया निजान्तःस्थितेषु विश्वेषु ददाथ दृष्टिम् ॥ ८-९॥

ततस्त्वदीयादयि नाभिरन्ध्रादुदञ्चितं किञ्चन दिव्यपद्मम् ।
निलीननिश्शेषपदार्थमालासङ्क्षेपरूपं मुकुलायमानम् ॥ ८-१०॥

तदेतदम्भोरुहकुड्मलं ते कलेबरात्तोयपथे प्ररूढम् ।
बहिर्निरीतं परितः स्फुरद्भिः स्वधामभिर्ध्वान्तमलं न्यकृन्तत् ॥ ८-११॥

सम्फुल्लपत्रे नितरां विचित्रे तस्मिन्भवद्वीर्यधृते सरोजे ।
स पद्मजन्मा विधिराविरासीत् स्वयम्प्रबुद्धाखिलवेदराशिः ॥ ८-१२॥

अस्मिन्परात्मन् ननु पाद्मकल्पे त्वमित्थमुत्थापितपद्मयोनिः ।
अनन्तभूमा मम रोगराशिं निरुन्धि वातालयवास विष्णो ॥ ८-१३॥

इति अष्टमदशकं समाप्तम् ॥

## नवमदशकम् (९)

ब्रह्मणः तपः तथा लोकसृष्टिः ।

9 Description of Creation

स्थितः स कमलोद्भवस्तव हि नाभिपङ्केरुहे
कुतः स्विदिदमम्बुधावुदितमित्यनालोकयन् ।
तदीक्षणकुतूहलात्प्रतिदिशं विवृत्तानन-
श्चतुर्वदनतामगाद्विकसदष्टदृष्ट्यम्बुजाम् ॥ ९-१॥

महार्णवविघूर्णितं कमलमेव तत्केवलं
विलोक्य तदुपाश्रयं तव तनुं तु नालोकयन् ।
क एष कमलोदरे महति निस्सहायो ह्यहं
कुतः स्विदिदमम्बुजं समजनीति चिन्तामगात् ॥ ९-२॥

अमुष्य हि सरोरुहः किमपि कारणं सम्भवे-
दिति स्म कृतनिश्चयः स खलु नालरन्ध्राध्वना ।
स्वयोगबलविद्यया समवरूढवान्प्रौढधीः
त्वदीयमतिमोहनं न तु कलेबरं दृष्टवान् ॥ ९-३॥

ततस्सकलनालिकाविवरमार्गगो मार्गयन्
प्रयस्य शतवत्सरं किमपि नैव सन्दृष्टवान् ।
निवृत्य कमलोदरे सुखनिषण्ण एकाग्रधीः
समाधिबलमादधे भवदनुग्रहैकाग्रही ॥ ९-४॥

शतेन परिवत्सरैर्दृढसमाधिबन्धोल्लसत्-
प्रबोधविशदीकृतः स खलु पद्मिनीसम्भवः ।
अदृष्टचरमद्भुतं तव हि रूपमन्तर्दृशा
व्यचष्ट परितुष्टधीर्भुजगभोगभागाश्रयम् ॥ ९-५॥

किरीटमुकुटोल्लसत्कटकहारकेयूरयुङ्-
मणिस्फुरितमेखलं सुपरिवीतपीताम्बरम् ।

कलायकुसुमप्रभं गलतलोल्लसत्कौस्तुभं
वपुस्तदयि भावये कमलजन्मने दर्शितम् ॥ ९-६॥

श्रुतिप्रकरदर्शितप्रचुरवैभव श्रीपते
हरे जय जय प्रभो पदमुपैषि दिष्ट्या दृशोः ।
कुरुष्व धियमाशु मे भुवननिर्मितौ कर्मठा-
मिति द्रुहिणवर्णितस्वगुणबंहिमा पाहि माम् ॥ ९-७॥

लभस्व भुवनत्रयीरचनदक्षतामक्षतां
गृहाण मदनुग्रहं कुरु तपश्च भूयो विधे ।
भवत्वखिलसाधनी मयि च भक्तिरत्युत्कटे-
त्युदीर्य गिरमादधा मुदितचेतसं वेधसम् ॥ ९-८॥

शतं कृततपास्ततः स खलु दिव्यसंवत्सरा-
नवाप्य च तपोबलं मतिबलं च पूर्वाधिकम् ।
उदीक्ष्य किल कम्पितं पयसि पङ्कजं वायुना
भवद्बलविजृम्भितः पवनपाथसी पीतवान् ॥ ९-९॥

तवैव कृपया पुनः सरसिजेन तेनैव सः
प्रकल्प्य भुवनत्रयीं प्रववृते प्रजानिर्मितौ ।
तथाविधकृपाभरो गुरुमरुत्पुराधीश्वर
त्वमाशु परिपाहि मां गुरुदयोक्षितैरीक्षितैः ॥ ९-१०॥

इति नवमदशकं समाप्तम् ॥

## दशमदशकम् (१०)

## सृष्टिवैविध्यम् ।

## 10 The Variety of Creation

वैकुण्ठ वर्धितबलोऽथ भवत्प्रसादा-

दम्भोजयोनिरसृजत्किल जीवदेहान् ।

स्थास्नूनि भूरुहमयानि तथा तिरश्चां

जातीर्मनुष्यनिवहानपि देवभेदान् ॥ १०-१॥

मिथ्याग्रहास्मिमतिरागविकोपभीति-

रज्ञानवृत्तिमिति पञ्चविधां स सृष्ट्वा ।

उद्दामतामसपदार्थविधानदून-

स्तेने त्वदीयचरणस्मरणं विशुद्ध्यै ॥ १०-२॥

तावत्ससर्ज मनसा सनकं सनन्दं

भूयस्सनातनमुनिं च सनत्कुमारम् ।

ते सृष्टिकर्मणि तु तेन नियुज्यमाना-

स्त्वत्पादभक्तिरसिका जगृहुर्न वाणीम् ॥ १०-३॥

तावत्प्रकोपमुदितं प्रतिरुन्धतोऽस्य

भ्रूमध्यतोऽजनि मृडो भवदेकदेशः ।
नामानि मे कुरु पदानि च हा विरिञ्चे-
त्यादौ रुरोद किल तेन स रुद्रनामा ॥ १०-४॥

एकादशाह्वयतया च विभिन्नरूपं
रुद्रं विधाय दयिता वनिताश्च दत्त्वा ।
तावन्त्यदत्त च पदानि भवत्प्रणुन्नः
प्राह प्रजाविरचनाय च सादरं तम् ॥ १०-५॥

रुद्राभिसृष्टभयदाकृतिरुद्रसङ्घ-
सम्पूर्यमाणाभुवनत्रयभीतचेताः ।
मा मा प्रजाः सृज तपश्चर मङ्गलाये-
त्याचष्ट तं कमलभूर्भवदीरितात्मा ॥ १०-६॥

तस्याथ सर्गरसिकस्य मरीचिरत्रि-
स्तत्राङ्गिराः क्रतुमुनिः पुलहः पुलस्त्यः ।
अङ्गादजायत भृगुश्च वसिष्ठदक्षौ
श्रीनारदश्च भगवन् भवदङ्घ्रिदासः ॥ १०-७॥

धर्मादिकानभिसृजन्नथ कर्दमं च
वाणीं विधाय विधिरङ्गजसङ्कुलोऽभूत् ।
त्वद्बोधितैः सनकदक्षमुखैस्तनूजै-
रुद्बोधितश्च विरराम तमो विमुञ्चन् ॥ १०-८॥

वेदान्पुराणनिवहानपि सर्वविद्याः
कुर्वन्निजाननगणाच्चतुराननोऽसौ ।
पुत्रेषु तेषु विनिधाय स सर्गवृद्धि-
मप्राप्नुवंस्तव पदाम्बुजमाश्रितोऽभूत् ॥ १०-९॥

जानन्नुपायमथ देहमजो विभज्य
स्त्रीपुंसभावमभजन्मनुतद्वधूभ्याम् ।
ताभ्यां च मानुषकुलानि विवर्धयंस्त्वं
गोविन्द मारुतपुरेश निरुन्धि रोगान् ॥ १०-१०॥

इति दशमदशकं समाप्तम् ॥

## एकादशदशकम् (११)

सनकादीनां वैकुण्ठदर्शनम् । हिरण्याक्षस्य तथा हिरण्यकशिपोः जननम् ।

## 11 - Entry of Sanaka And Others Into Vaikuntha and Birth of Hiranyaksha And Hiranyakashipu

क्रमेण सर्गे परिवर्धमाने कदापि दिव्याः सनकादयस्ते ।
भवद्विलोकाय विकुण्ठलोकं प्रपेदिरे मारुतमन्दिरेश ॥ ११-१॥

मनोज्ञनैश्रेयसकाननाद्यैरनेकवापीमणिमन्दिरैश्च ।

अनोपमं तं भवतो निकेतं मुनीश्वराः प्रापुरतीतकक्ष्याः ॥ ११-२॥

भवद्दिदृक्षून्भवनं विविक्षून्द्वाःस्थौ जयस्तान् विजयोऽप्यरुन्धाम् ।
तेषां च चित्ते पदमाप कोपः सर्वं भवत्प्रेरणयैव भूमन् ॥ ११-३॥

वैकुण्ठलोकानुचितप्रचेष्टौ कष्टौ युवां दैत्यगतिं भजेतम् ।
इति प्रशप्तौ भवदाश्रयौ तौ हरिस्मृतिर्नोऽस्त्विति नेमतुस्तान् ॥ ११-४॥

तदेतदाज्ञाय भवानवाप्तः सहैव लक्ष्म्या बहिरम्बुजाक्ष ।
खगेश्वरांसार्पितचारुबाहुरानन्दयंस्तानभिराममूर्त्या ॥ ११-५॥

प्रसाद्य गीर्भिः स्तुवतो मुनीन्द्राननन्यनाथावथ पार्षदौ तौ
संरम्भयोगेन भवैस्त्रिभिर्मामुपेतमित्यात्तकृपं न्यगादीः ॥ ११-६॥

त्वदीयभृत्यावथ कश्यपात्तौ सुरारिवीरावुदितौ दितौ द्वौ ।
सन्ध्यासमुत्पादनकष्टचेष्टौ यमौ च लोकस्य यमाविवान्यौ ॥ ११-७॥

हिरण्यपूर्वः कशिपुः किलैकः पुरो हिरण्याक्ष इति प्रतीतः ।
उभौ भवन्नाथमशेषलोकं रुषा न्यरुन्धां निजवासनान्धौ ॥ ११-८॥

तयोर्हिरण्याक्षमहासुरेन्द्रो रणाय धावन्ननवाप्तवैरी ।
भवत्प्रियां क्ष्मां सलिले निमज्य चचार गर्वाद्विनदन् गदावान् ॥ ११-९॥

ततो जलेशात्सदृशं भवन्तं निशम्य बभ्राम गवेषयंस्त्वाम् ।
भक्तैकदृश्यः स कृपानिधे त्वं निरुन्धि रोगान् मरुदालयेश ॥ ११-१०॥

इति एकादशदशकं समाप्तम् ॥

## द्वादशदशकम् (१२)

## वराहावतारम् ।

## 12 - The Boar Incarnation

स्वायम्भुवो मनुरथो जनसर्गशीलो दृष्ट्वा महीमसमये सलिले निमग्नाम् ।
स्रष्टारमाप शरणं भवदङ्घ्रिसेवातुष्टाशयं मुनिजनैः सह सत्यलोके ॥ १२-१॥

कष्टं प्रजाः सृजति मय्यवनिर्निमग्ना स्थानं सरोजभव कल्पय तत्प्रजानाम् ।
इत्येवमेष कथितो मनुना स्वयम्भूरम्भोरुहाक्ष तव पादयुगं व्यचिन्तीत् ॥ १२-२॥

हा हा विभो जलमहं न्यपिबं पुरस्तादद्यापि मज्जति मही किमहं करोमि ।
इत्थं त्वदङ्घ्रियुगलं शरणं यतोऽस्य नासापुटात्समभवः शिशुकोलरूपी ॥ १२-३॥

अङ्गुष्ठमात्रवपुरुत्पतितः पुरस्ताद्भूयोऽथ कुम्भिसदृशः समजृम्भथास्त्वम् ।
अभ्रे तथाविधमुदीक्ष्य भवन्तमुच्चैर्विस्मेरतां विधिरगात्सह सूनुभिः स्वैः ॥ १२-४॥

कोऽसावचिन्त्यमहिमा किटिरुत्थितो मे नासापुटात्किमु भवेदजितस्य माया ।

इत्थं विचिन्तयति धातरि शैलमात्रः सद्यो भवान्किल जगर्ज्जिथ घोरघोरम् ॥ १२-५॥

तं ते निनादमुपकर्ण्य जनस्तपःस्थाः सत्यस्थिताश्च मुनयो नुनुवुर्भवन्तम् ।
तत्स्तोत्रहर्षुलमनाः परिणद्य भूयस्तोयाशयं विपुलमूर्तिरवातरस्त्वम् ॥ १२-६॥

ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा प्रोत्क्षिप्तवालधिरवाङ्मुखघोरघोणः ।४
तूर्णप्रदीर्णजलदः परिघूर्णदक्ष्णा स्तोतॄन्मुनीन् शिशिरयन्नवतेरिथ त्वम् ॥ १२-७॥

अन्तर्जलं तदनु सङ्कुलनक्रचक्रं भ्राम्यत्तिमिङ्गिलकुलं कलुषोर्मिमालम् ।
आविश्य भीषणरवेण रसातलस्थानाकम्पयन्वसुमतीमगवेषयस्त्वम् ॥ १२-८॥

दृष्ट्वाऽथ दैत्यहतकेन रसातलान्ते संवेशितां झटिति कूटकिटिर्विभो त्वम् ।
आपातुकानविगणय्य सुरारिखेटान् दंष्ट्राङ्कुरेण वसुधामदधाः सलीलम् ॥ १२-९॥

अभ्युद्धरन्नथ धरां दशनाग्रलग्नमुस्ताङ्कुराङ्कित इवाधिकपीवरात्मा ।
उद्धूतघोरसलिलाज्जलधेरुदञ्चन् क्रीडावराहवपुरीश्वर पाहि रोगात् ॥ १२-१०॥

इति द्वादशदशकं समाप्तम् ॥

## त्रयोदशदशकम् (१३)

## हिरण्याक्षवधम् ।

## 13 - The Slaying of HiranyakSha

हिरण्याक्षं तावद्वरद भवदन्वेषणपरं

चरन्तं सांवर्ते पयसि निजजङ्घापरिमिते ।

भवद्भक्तो गत्वा कपटपटुधीर्नारदमुनिः

शनैरूचे नन्दन् दनुजमपि निन्दंस्तव बलम् ॥ १३-१॥

स मायावी विष्णुर्हरति भवदीयां वसुमतीं

प्रभो कष्टं कष्टं किमिदमिति तेनाभिगदितः ।

नदन् क्वासौ क्वासाविति स मुनिना दर्शितपथो

भवन्तं सम्प्रापद्धरणिधरमुद्यन्तमुदकात् ॥ १३-२॥

अहो आरण्योऽयं मृग इति हसन्तं बहुतरै-

र्दुरुक्तैर्विध्यन्तं दितिसुतमवज्ञाय भगवन् ।

महीं दृष्ट्वा दंष्ट्राशिरसि चकितां स्वेन महसा

पयोधावाधाय प्रसभमुदयुङ्क्था मृधविधौ ॥ १३-३॥

गदापाणौ दैत्ये त्वमपि हि गृहीतोन्नतगदो

नियुद्धेन क्रीडन्घटघटरवोद्घुष्टवियता ।

रणालोकौत्सुक्यान्मिलति सुरसङ्घे द्रुतममुं५

निरुन्ध्याः सन्ध्यातः प्रथममिति धात्रा जगदिषे ॥ १३-४॥

गदोन्मर्दे तस्मिंस्तव खलु गदायां दितिभुवो

गदाघाताद्भूमौ झटिति पतितायामहह ! भोः ! ।

मृदुस्मेरास्यस्त्वं दनुजकुलनिर्मूलनचणं
महाचक्रं स्मृत्वा करभुवि दधानो रुरुचिषे ॥ १३-५॥

ततः शूलं कालप्रतिमरुषि दैत्ये विसृजति
त्वयि छिन्दत्येतत् करकलितचक्रप्रहरणात् ।
समारुष्टो मुष्ट्या स खलु वितुदंस्त्वां समतनोत्
गलन्माये मायास्त्वयि किल जगन्मोहनकरीः ॥ १३-६॥

भवच्चक्रज्योतिष्कणलवनिपातेन विधुते
ततो मायाचक्रे विततघनरोषान्धमनसम् ।
गरिष्ठाभिर्मुष्टिप्रहृतिभिरभिघ्नन्तमसुरं
स्वपादाङ्गुष्ठेन श्रवणपदमूले निरवधीः ॥ १३-७॥

महाकायस्सोऽयं तव करसरोजप्रमथितो
गलद्रक्तो वक्त्रादपतदृषिभिः श्लाघितहतिः ।
तदा त्वामुद्दामप्रमदभरविद्योतिहृदया
मुनीन्द्रास्सान्द्राभिः स्तुतिभिरनुवन्नध्वरतनुम् ॥ १३-८॥

त्वचि च्छन्दो रोमस्वपि कुशगणश्चक्षुषि घृतं
चतुर्होतारोऽङ्घ्रौ स्रुगपि वदने चोदर इडा ।
ग्रहा जिह्वायां ते परपुरुष कर्णे च चमसा
विभो सोमो वीर्यं वरद गलदेशेऽप्युपसदः ॥ १३-९॥

मुनीन्द्रैरित्यादिस्तवनमुखरैर्मोदितमना
महीयस्या मूर्त्या विमलतरकीर्त्या च विलसन् ।
स्वधिष्ण्यं सम्प्राप्तः सुखरसविहारी मधुरिपो
निरुन्ध्या रोगं मे सकलमपि वातालयपते ॥ १३-१०॥

इति त्रयोदशदशकं समाप्तम् ॥

## चतुर्दशदशकम् (१४)

## कपिलावतारम् ।

## 14 - The Kapila Incarnation

समनुस्मृततावकाङ्घ्रियुग्मः स मनुः पङ्कजसम्भवाङ्गजन्मा ।
निजमन्तरमन्तरायहीनं चरितं ते कथयन्सुखं निनाय ॥ १४-१॥

समये खलु तत्र कर्दमाख्यो द्रुहिणच्छायभवस्तदीयवाचा ।
धृतसर्गरसो निसर्गरम्यं भगवंस्त्वामयुतं समाः सिषेवे ॥ १४-२॥

गरुडोपरि कालमेघकम्रं विलसत्केलिसरोजपाणिपद्मम् ।
हसितोल्लसिताननं विभो त्वं वपुराविष्कुरुषे स्म कर्दमाय ॥ १४-३॥

स्तुवते पुलकावृताय तस्मै मनुपुत्रीं दयितां नवापि पुत्रीः ।
कपिलं च सुतं स्वमेव पश्चात्स्वगतिं चाप्यनुगृह्य निर्गतोऽभूः ॥ १४-४॥

स मनुश्शतरूपया महिष्या गुणवत्या सुतया च देवहूत्या ।
भवदीरितनारदोपदिष्टस्समगात्कर्दममागतिप्रतीक्षम् ॥ १४-५॥

मनुनोपहृतां च देवहूतिं तरुणीरत्नमवाप्य कर्दमोऽसौ ।
भवदर्चननिर्वृतोऽपि तस्यां दृढशुश्रूषणया दधौ प्रसादम् ॥ १४-६॥

स पुनस्त्वदुपासनप्रभावाद्दयिताकामकृते कृते विमाने ।
वनिताकुलसङ्कुलो नवात्मा व्यहरद्देवपथेषु देवहूत्या ॥ १४-७॥

शतवर्षमथ व्यतीत्य सोऽयं नव कन्याः समवाप्य धन्यरूपाः ।
वनयानसमुद्यतोऽपि कान्ताहितकृत्त्वज्जननोत्सुको न्यवात्सीत् ॥ १४-८॥

निजभर्तृगिरा भवन्निषेवा निरतायामथ देव देवहूत्याम् ।
कपिलस्त्वमजायथा जनानां प्रथयिष्यन्परमात्मतत्त्वविद्याम् ॥ १४-९॥

वनमेयुषि कर्दमे प्रसन्ने मतसर्वस्वमुपादिशञ्जनन्यै ।
कपिलात्मक वायुमदिरेश त्वरितं त्वं परिपाहि मां गदौघात् ॥ १४-१०॥

इति चतुर्दशदशकं समाप्तम् ॥

पञ्चदशदशकम् (१५)

## कपिलोपदेशम् ।

## 15 - The Teachings of Kapila

मतिरिह गुणसक्ता बन्धकृत्तेष्वसक्ता
त्वमृतकृदुपरुन्धे भक्तियोगस्तु सक्तिम् ।
महदनुगमलभ्या भक्तिरेवात्र साध्या
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-१॥

प्रकृतिमहदहङ्काराश्च मात्राश्च भूता-
न्यपि हृदपि दशाक्षी पूरुषः पञ्चविंशः ।
इति विदितविभागो मुच्यतेऽसौ प्रकृत्या
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-२॥

प्रकृतिगतगुणौघैर्नाज्यते पूरुषोऽयं
यदि तु सजति तस्यां तद्गुणास्तं भजेरन् ।
मदनुभजनतत्त्वालोचनैः साप्यपेयात्
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-३॥

विमलमतिरुपात्तैरासनाद्यैर्मदङ्गं
गरुडसमधिरूढं दिव्यभूषायुधाङ्कम् ।
रुचितुलिततमालं शीलयेतानुवेलं
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-४॥

मम गुणगणलीलाकर्णनैः कीर्तनाद्यैः
मयि सुरसरिदोघप्रख्यचित्तानुवृत्तिः ।
भवति परमभक्तिः सा हि मृत्योर्विजेत्री
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-५॥

अहह बहुलहिंसासञ्चितार्थैः कुटुम्बं
प्रतिदिनमनुपुष्णन् स्त्रीजितो बाललाली ।
विशति हि गृहसक्तो यातनां मय्यभक्तः
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-६॥

युवतिजठरखिन्नो जातबोधोऽप्यकाण्डे
प्रसवगलितबोधः पीडयोल्लङ्घ्य बाल्यम् ।६
पुनरपि बत मुह्यत्येव तारुण्यकाले
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-७॥

पितृसुरगणयाजी धार्मिको यो गृहस्थः
स च निपतति काले दक्षिणाध्वोपगामी ।
मयि निहितमकामं कर्म तूदक्पथार्थे
कपिलतनुरिति त्वं देवहूत्यै न्यगादीः ॥ १५-८॥

इति सुविदितवेद्यां देव हे देवहूतिं
कृतनुतिमनुगृह्य त्वं गतो योगिसङ्घैः ।
विमलमतिरथाऽसौ भक्तियोगेन मुक्ता

त्वमपि जनहितीर्थं वर्तसे प्रागुदीच्याम् ॥ १५-९॥

परम किमु बहूक्त्या त्वत्पदाम्भोजभक्तिं
सकलभयविनेत्रीं सर्वकामोपनेत्रीम् ।
वदसि खलु दृढं त्वं तद्विधूयामयान्मे
गुरुपवनपुरेश त्वय्युपाधत्स्व भक्तिम् ॥ १५-१०॥

इति पञ्चदशदशकं समाप्तम् ॥

## षोडशदशकम् (१६)

## नरनारायणावतारं तथा दक्षयागः ।

## 16 - Nara Narayana And DakShayaga

दक्षो विरिञ्चतनयोऽथ मनोस्तनूजां लब्ध्वा प्रसूतिमिह षोडश चाप कन्याः ।
धर्मे त्रयोदश ददौ पितृषु स्वधां च स्वाहां हविर्भुजि सतीं गिरिशे त्वदंशे ॥ १६-१॥

मूर्तिर्हि धर्मगृहिणी सुषुवे भवन्तं नारायणं नरसखं महितानुभावम् ।
यज्जन्मनि प्रमुदिताः कृततुर्यघोषाः पुष्पोत्करान्प्रववृषुर्नुनुवुः सुरौघाः ॥ १६-२॥

दैत्यं सहस्रकवचं कवचैः परीतं साहस्रवत्सरतपस्समराभिलव्यैः ।
पर्यायनिर्मिततपस्समरौ भवन्तौ शिष्टैककङ्कटममुं न्यहतां सललिम् ॥ १६-३॥

अन्वाचरन्नुपदिशन्नपि मोक्षधर्मं त्वं भ्रातृमान् बदरिकाश्रममध्यवात्सीः ।
शक्रोऽथ ते शमतपोबलनिस्सहात्मा दिव्याङ्गनापरिवृतं प्रजिघाय मारम् ॥ १६-४॥

कामो वसन्तमलयानिलबन्धुशाली कान्ताकटाक्षविशिखैर्विकसद्विलासैः ।
विध्यन्मुहुर्मुहुरकम्पमुदीक्ष्य च त्वां भीतस्त्वायाथ जगदे मृदुहासभाजा ॥ १६-५॥

भीत्यालमङ्गजवसन्तसुराङ्गना वो मन्मानसन्त्विह जुषुध्वमिति ब्रुवाणः ।
त्वं विस्मयेन परितः स्तुवतामथैषां प्रादर्शयः स्वपरिचारककातराक्षीः ॥ १६-६॥

सम्मोहनाय मिलिता मदनादयस्ते त्वद्दासिकापरिमलैः किल मोहमापुः ।
दत्तां त्वया च जगृहुस्त्रपयैव सर्वस्वर्वासिगर्वशमनीं पुनरुर्वशीं ताम् ॥ १६-७॥

दृष्ट्वोर्वशीं तव कथां च निशम्य शक्रः पर्याकुलोऽजनि भवन्महिमावमर्शात् ।
एवं प्रशान्तरमणीयतरोऽवतारस्त्वत्तोऽधिको वरद कृष्णतनुस्त्वमेव ॥ १६-८॥

दक्षस्तु धातुरतिलालनया रजोऽन्धो नात्यादृतस्त्वयि च कष्टमशान्तिरासीत् ।
येन व्यरुन्ध स भवत्तनुमेव शर्वं यज्ञे च वैरपिशुने स्वसुतां व्यमानीत् ॥ १६-९॥

क्रुद्धे शमर्दितमखः स तु कृत्तशीर्षो देवप्रसादितहरादथ लब्धजीवः ।७
त्वत्पूरितक्रतुवरः पुनराप शान्तिं स त्वं प्रशान्तिकर पाहि मरुत्पुरेश ॥ १६-१०॥

इति षोडशदशकं समाप्तम् ॥

## सप्तदशदशकम् (१७)

## ध्रुवचरितम् ।

## 17 - The Story of Dhruva

उत्तानपादनृपतेर्मनुनन्दनस्य जाया बभूव सुरुचिर्नितरामभीष्टा ।
अन्या सुनीतिरिति भर्तुरनादृता सा त्वामेव नित्यमगतिः शरणं गताऽभूत् ॥ १७-१॥

अङ्के पितुः सुरुचिपुत्रकमुत्तमं तं दृष्ट्वा ध्रुवः किल सुनीतिसुतोऽधिरोक्ष्यन् ।
आचिक्षिपे किल शिशुः सुतरां सुरुच्या दुस्सन्त्यजा खलु भवद्विमुखैरसूया ॥ १७-२॥

त्वन्मोहिते पितरि पश्यति दारवश्ये दूरं दुरुक्तिनिहतः स गतो निजाम्बाम् ।
साऽपि स्वकर्मगतिसन्तरणाय पुंसां त्वत्पादमेव शरणं शिशवे शशंस ॥ १७-३॥

आकर्ण्य सोऽपि भवदर्चननिश्चितात्मा मानी निरेत्य नगरात्किल पञ्चवर्षः ।
सन्दृष्टनारदनिवेदितमन्त्रमार्गस्त्वामारराध तपसा मधुकाननान्ते ॥ १७-४॥

ताते विषण्णहृदये नगरीं गतेन श्रीनारदेन परिसान्त्वितचित्तवृत्तौ ।
बालस्त्वदर्पितमनाः क्रमवर्धितेन निन्ये कठोरतपसा किल पञ्च मासान् ॥ १७-५॥

तावत्तपोबलनिरुच्छ्वसिते दिगन्ते देवार्थितस्त्वमुदयत्करुणार्द्रचेताः ।
त्वद्रूपचिद्रसनिलीनमतेः पुरस्तादाविर्बभूविथ विभो गरुडाधिरूढः ॥ १७-६॥

त्वद्दर्शनप्रमदभारतरङ्गितं तं दृग्भ्यां निमग्नमिव रूपरसायने ते ।
तुष्टूषमाणमवगम्य कपोलदेशे संस्पृष्टवानसि दरेण तथाऽऽदरेण ॥ १७-७॥

तावद्विबोधविमलं प्रणुवन्तमेनमाभाषथास्त्वमवगम्य तदीयभावम् ।
राज्यं चिरं समनुभूय भजस्व भूयः सर्वोत्तरं ध्रुव पदं विनिवृत्तिहीनम् ॥ १७-८॥

इत्यूचिषि त्वयि गते नृपनन्दनोऽसावानन्दिताखिलजनो नगरीमुपेतः ।
रेमे चिरं भवदनुग्रहपूर्णकामस्ताते गते च वनमादृतराज्यभारः ॥ १७-९॥

यक्षेण देव निहते पुनरुत्तमेऽस्मिन् यक्षैः स युद्धनिरतो विरतो मनूक्त्या ।
शान्त्या प्रसन्नहृदयाद्धनदादुपेतात् त्वद्भक्तिमेव सुदृढामवृणोन्महात्मा ॥ १७-१०॥

अन्ते भवत्पुरुषनीतविमानयातो मात्रा समं ध्रुवपदे मुदितोऽयमास्ते ।
एवं स्वभृत्यजनपालनलोलधीस्त्वं वातालयाधिप निरुन्धि ममामयौघान् ॥ १७-११॥

इति सप्तदशदशकं समाप्तम् ॥

अष्टादशदशकम् (१८)

पृथुचरितम् ।

18 - The Story of Prithu

जातस्य ध्रुवकुल एव तुङ्गकीर्तेरङ्गस्य व्यजनि सुतः स वेननामा ।

तद्दोषव्यथितमतिः स राजवर्यस्त्वत्पादे विहितमना वनं गतोऽभूत् ॥ १८-१॥

पापोऽपि क्षितितलपालनाय वेनः पौराद्यैरुपनिहितः कठोरवीर्यः ।
सर्वेभ्यो निजबलमेव सम्प्रशंसन् भूचक्रे तव यजनान्ययं न्यरौत्सीत् ॥ १८-२॥

सम्प्राप्ते हितकथनाय तापसौघे मत्तोऽन्यो भुवनपतिर्न कश्चनेति ।
त्वन्निन्दावचनपरो मुनीश्वरैस्तैः शापाग्नौ शलभदशामनायि वेनः ॥ १८-३॥

तन्नाशात्खलजनभीरुकैर्मुनीन्द्रैस्तन्मात्रा चिरपरिरक्षिते तदङ्गे ।
त्यक्ताघे परिमथितादथोरुदण्डाद्दोर्दण्डे परिमथिते त्वमाविरासीः ॥ १८-४॥

विख्यातः पृथुरिति तापसोपदिष्टैः सूताद्यैः परिणुतभाविभूरिवीर्यः ।
वेनार्त्या कबलितसम्पदं धरित्रीमाक्रान्तां निजधनुषा समामकार्षीः ॥ १८-५॥

भूयस्तां निजकुलमुख्यवत्सयुक्तैर्देवाद्यैः समुचितचारुभाजनेषु ।
अन्नादीन्यभिलषितानि यानि तानि स्वच्छन्दं सुरभितनूमदूदुहस्त्वम् ॥ १८-६॥

आत्मानं यजति मखैस्त्वयि त्रिधामन्नारब्धे शततमवाजिमेधयागे ।
स्पर्धालुः शतमख एत्य नीचवेषो हृत्वाऽश्वं तव तनयात् पराजितोऽभूत् ॥ १८-७॥

देवेन्द्रं मुहुरिति वाजिनं हरन्तं वह्नौ तं मुनिवरमण्डले जुहूषौ ।
रुन्धाने कमलभवे क्रतोः समाप्तौ साक्षात्त्वं मधुरिपुमैक्षथाः स्वयं स्वम् ॥ १८-८॥

तद्दत्तं वरमुपलभ्य भक्तिमेकां गङ्गान्ते विहितपदः कदापि देव ।
सत्रस्थं मुनिनिवहं हितानि शंसन्नैक्षिष्ठाः सनकमुखान् मुनीन् पुरस्तात् ॥ १८-९॥

विज्ञानं सनकमुखोदितं दधानः स्वात्मानं स्वयमगमो वनान्तसेवी ।
तत्तादृक्पृथुवपुरीश सत्वरं मे रोगौघं प्रशमय वातगेहवासिन् ॥ १८-१०॥

इति अष्टादशदशकं समाप्तम् ॥

## एकोनविंशदशकम् (१९)

## प्रचेतॄणां चरितम् ।

## 19 -The Story of Pracetas

पृथोस्तु नप्ता पृथुधर्मकर्मठः प्राचीनबर्हिर्युवतौ शतद्रुतौ ।
प्रचेतसो नाम सुचेतसः सुतानजीजनत्त्वत्करुणाङ्कुरानिव ॥ १९-१॥

पितुः सिसृक्षानिरतस्य शासनाद्भवत्तपस्याभिरता दशापि ते ।
पयोनिधिं पश्चिममेत्य तत्तटे सरोवरं सन्ददृशुर्मनोहरम् ॥ १९-२॥

तदा भवत्तीर्थमिदं समागतो भवो भवत्सेवकदर्शनादृतः ।
प्रकाशमासाद्य पुरः प्रचेतसामुपादिशद्भक्ततमस्तवस्तवम् ॥ १९-३॥

स्तवं जपन्तस्तममी जलान्तरे भवन्तमासेविषतायुतं समाः ।

भवत्सुखास्वादरसादमीष्वियान्बभूव कलो ध्रुववन्न शीघ्रता ॥ १९-४॥

तपोभिरेषामतिमात्रवर्धिभिः स यज्ञहिंसानिरतोऽपि पावितः ।
पिताऽपि तेषां गृहयातनारदप्रदर्शितात्मा भवदात्मतां ययौ ॥ १९-५॥

कृपाबलेनैव पुरः प्रचेतसां प्रकाशमागाः पतगेन्द्रवाहनः ।
विराजि चक्रादिवरायुधांशुभिर्भुजाभिरष्टाभिरुदञ्चितद्युतिः ॥ १९-६॥

प्रचेतसां तावदयाचतामपि त्वमेव कारुण्यभराद्वरानदाः ।
भवद्विचिन्ताऽपि शिवाय देहिनां भवत्वसौ रुद्रनुतिश्च कामदा ॥ १९-७॥

अवाप्य कान्तां तनयां महीरुहां तया रमध्वं दशलक्षवत्सरीम् ।
सुतोऽस्तु दक्षो ननु तत्क्षणाच्च मां प्रयास्यथेति न्यगदो मुदैव तान् ॥ १९-८॥

ततश्च ते भूतलरोधिनस्तरून्क्रुधा दहन्तो द्रुहिणेन वारिताः ।
द्रुमैश्च दत्तां तनयामवाप्य तां त्वदुक्तकालं सुखिनोऽभिरेमिरे ॥ १९-९॥

अवाप्य दक्षं च सुतं कृताध्वराः प्रचेतसो नारदलब्धया धिया ।
अवापुरानन्दपदं तथाविधस्त्वमीश वातालयनाथ पाहिमाम् ॥ १९-१०॥

इति एकोनविंशदशकं समाप्तम् ॥

## विंशदशकम् (२०)

## ऋषभयोगीश्वरचरितम् ।

## 20 - The Story of Rishabhayogishvara

प्रियव्रतस्य प्रियपुत्रभूतादाग्नीध्रराजादुदितो हि नाभिः ।
त्वां दृष्टवानिष्टदमिष्टिमध्ये तवैव तुष्ट्यै कृतयज्ञकर्मा ॥ २०-१॥

अभिष्टुतस्तत्र मुनीश्वरैस्त्वं राज्ञा स्वतुल्यं सुतमर्थ्यमानः ।
स्वयं जनिष्येऽहमिति ब्रुवाणस्तिरोदधा बर्हिषि विश्वमूर्ते ॥ २०-२॥

नाभिप्रियायामथ मेरुदेव्यां त्वमंशतोऽभूरृषभाभिधानः ।
अलोकसामान्यगुणप्रभावप्रभाविताशेषजनप्रमोदः ॥ २०-३॥

त्वयि त्रिलोकीभृति राज्यभारं निधाय नाभिः सह मेरुदेव्या ।
तपोवनं प्राप्य भवन्निषेवी गतः किलानन्दपदं पदं ते ॥ २०-४॥

इन्द्रस्त्वदुत्कर्षकृतादमर्षाद्ववर्ष नास्मिन्नजनाभवर्षे ।
यदा तदा त्वं निजयोगशक्त्या स्ववर्षमेनद्व्यदधाः सुवर्षम् ॥ २०-५॥

जितेन्द्रदत्तां कमनीं जयन्तीमथोद्वहन्नात्मरताशयोऽपि ।
अजीजनत्तत्र शतं तनूजानेषां क्षितीशो भरतोऽग्रजन्मा ॥ २०-६॥

नवाभवन्योगिवरा नवान्ये त्वपालयन्भारतवर्षखण्डान् ।

सैका त्वशीतिस्तव शेषपुत्रास्तपोबलाद्भूसुरभूयमीयुः ॥ २०-७॥

उक्त्वा सुतेभ्योऽथ मुनीन्द्रमध्ये विरक्तिभक्त्यन्वितमुक्तिमार्गम् ।
स्वयं गतः पारमहंस्यवृत्तिमधा जडोन्मत्तपिशाचचर्याम् ॥ २०-८॥

परात्मभूतोऽपि परोपदेशं कुर्वन्भवान्सर्वनिरस्यमानः ।
विकारहीनो विचचार कृत्स्नां महीमहीनात्मरसाभिलीनः ॥ २०-९॥

शयुव्रतं गोमृगकाकचर्यां चिरं चरन्नाप्य परं स्वरूपम् ।
दवाहृताङ्गः कुटकाचले त्वं तापान्ममापाकुरु वातनाथ ॥ २०-१०॥

इति विंशदशकं समाप्तम् ॥

## एकविंशदशकम् (२१)

नव वर्षाः तथा सप्तद्वीपाः । जम्बूद्वीपादिषु उपासनापद्धतिः ।

### 21 - Mode of Worship In Jambudvipa Etc

मध्योद्भवे भुव इलावृतनाम्नि वर्षे गौरीप्रधानवनिताजनमात्रभाजि ।
शर्वेण मन्त्रनुतिभिः सुमुपास्यमानं सङ्कर्षणात्मकमधीश्वर संश्रये त्वाम् ॥ २१-१॥

भद्राश्वनामक इलावृतपूर्ववर्षे भद्रश्रवोभिरृषिभिः परिणूयमानम् ।
कल्पान्तगूढनिगमोद्धरणप्रवीणं ध्यायामि देव हयशीर्षतनुं भवन्तम् ॥ २१-२॥

ध्यायामि दक्षिणगते हरिवर्षवर्षे प्राह्लादमुख्यपुरुषैः परिषेव्यमाणम् ।
उत्तुङ्गशान्तधवलाकृतिमेकशुद्धज्ञानप्रदं नरहरिं भगवन् भवन्तम् ॥ २१-३॥

वर्षे प्रतीचि ललितात्मनि केतुमाले लीलाविशेषललितस्मितशोभनाङ्गम् ।
लक्ष्म्या प्रजापतिसुतैश्च निषेव्यमाणं तस्याः प्रियाय धृतकामतनुं भजे त्वाम् ॥ २१-४॥

रम्ये ह्युदीचि खलु रम्यकनाम्नि वर्षे तद्वर्षनाथमनुवर्यसपर्यमाणम् ।
भक्तैकवत्सलममत्सरहृत्सु भान्तं मत्स्याकृतिं भुवननाथ भजे भवन्तम् ॥ २१-५॥

वर्षं हिरण्मयसमाह्वयमौत्तराहमासीनमद्रिधृतिकर्मठकामठाङ्गम् ।
संसेवते पितृगणप्रवरोऽर्यमायं तं त्वां भजामि भगवन् परचिन्मयात्मन् ॥ २१-६॥

किं चोत्तरेषु कुरुषु प्रियया धरण्या संसेवितो महितमन्त्रनुतिप्रभेदैः ।
दंष्ट्राग्रघृष्टघनपृष्ठगरिष्ठवर्ष्मा त्वं पाहि विज्ञनुतयज्ञवराहमूर्ते ॥ २१-७॥

याम्यां दिशं भजति किम्पुरुषाख्यवर्षे संसेवितो हनुमता दृढभक्तिभाजा ।
सीताभिरामपरमाद्भुतरूपशाली रामात्मकः परिलसन्परिपाहि विष्णो ॥ २१-८॥

श्रीनारदेन सह भारतखण्डमुख्यैस्त्वं साङ्ख्ययोगनुतिभिः समुपास्यमानः ।
आकल्पकालमिह साधुजनाभिरक्षी नारायणो नरसखः परिपाहि भूमन् ॥ २१-९॥

प्लाक्षेऽर्करूपमयि शाल्मल इन्दुरूपं द्वीपे भजन्ति कुशनामनि वह्निरूपम् ।

क्रौञ्चेऽम्बुरूपमथ वायुमयं च शाके त्वां ब्रह्मरूपमयि पुष्करनाम्नि लोकाः ॥ २१-१०॥

सर्वैर्ध्रुवादिभिरुडुप्रकरैर्ग्रहैश्च पुच्छादिकेष्ववयवेष्वभिकल्प्यमानैः । ८-९
त्वं शिंशुमारवपुषा महतामुपास्यः सन्ध्यासु रुन्धि नरकं मम सिन्धुशायिन् ॥ २१-११॥

पातालमूलभुवि शेषतनुं भवन्तं लोलैककुण्डलविराजिसहस्रशीर्षम् ।
नीलाम्बरं धृतहलं भुजगाङ्गनाभिर्जुष्टं भजे हर गदान्गुरुगेहनाथ ॥ २१-१२॥

इति एकविंशदशकं समाप्तम् ॥

द्वाविंशतिदशकम् (२२)

अजामिलोपाख्यानम् ।

22 - The Story of Ajamila

अजामिलो नाम महीसुरः पुरा चरन्विभो धर्मपथान् गृहाश्रमी ।
गुरोर्गिरा काननमेत्य दृष्टवान्सुधृष्टशीलां कुलटां मदाकुलाम् ॥ २२-१॥

स्वतः प्रशान्तोऽपि तदाहृताशयः स्वधर्ममुत्सृज्य तया समारमन् ।
अधर्मकारी दशमी भवन्पुनर्दधौ भवन्नामयुते सुते रतिम् ॥ २२-२॥

स मृत्युकाले यमराजकिङ्करान् भयङ्करांस्त्रीनभिलक्षयन्भिया ।
पुरा मनाक्त्वत्स्मृतिवासनाबलाज्जुहाव नारायणनामकं सुतम् ॥ २२-३॥

दुराशयस्यापि तदा त्वनिर्गतत्वदीयनामाक्षरमात्रवैभवात् ।
पुरोऽभिपेतुर्भवदीयपार्षदाश्चतुर्भुजा पीतपटा मनोरमाः ॥ २२-४॥

अमुं च सम्पाश्य विकर्षतो भटान् विमुञ्चतेत्यारुरुधुर्बलादमी ।
निवारितास्ते च भवज्जनैस्तदा तदीयपापं निखिलं न्यवेदयन् ॥ २२-५॥

भवन्तु पापानि कथं तु निष्कृते कृतेऽपि भो दण्डनमस्ति पण्डिताः ।९
न निष्कृतिः किं विदिता भवादृशामिति प्रभो त्वत्पुरुषा बभाषिरे ॥ २२-६॥

श्रुतिस्मृतिभ्यां विहिता व्रतादयः पुनन्ति पापं न लुनन्ति वासनाम् ।
अनन्तसेवा तु निकृन्तति द्वयीमिति प्रभो त्वत्पुरुषा बभाषिरे ॥ २२-७॥

अनेन भो जन्मसहस्रकोटिभिः कृतेषु पापेष्वपि निष्कृतिः कृता ।
यदग्रहीन्नाम भयाकुलो हरेरिति प्रभो त्वत्पुरुषा बभाषिरे ॥ २२-८॥

नृणामबुद्ध्यापि मुकुन्दकीर्तनं दहत्यघौघान्महिमास्य तादृशः ।
यथाग्निरेधांसि यथौषधं गदानिति प्रभो त्वत्पुरुषा बभाषिरे ॥ २२-९॥

इतीरितैर्याम्यभटैरपासृते भवद्भटानां च गणे तिरोहिते ।
भवत्स्मृतिं कञ्चन कालमाचरन्भवत्पदं प्रापि भवद्भटैरसौ ॥ २२-१०॥

स्वकिङ्करावेदनशङ्कितो यमस्त्वदङ्घ्रिभक्तेषु न गम्यतामिति ।१०

स्वकीयभृत्यानशिशिक्षदुच्चकैः स देव वातालयनाथ पाहि माम् ॥ २२-११॥

इति द्वाविंशदशकं समाप्तं

## त्रयोविंशतिदशकम् (२३)

### दक्षचरितं तथा चित्रकेतूपाख्यानम् ।

### 23 - The Stories of DakSha, Chitraketu, Etc

प्राचेतसस्तु भगवन्नपरोऽपि दक्षस्त्वत्सेवनं व्यधित सर्गविवृद्धिकामः ।
आविर्बभूविथ तदा लसदष्टबाहुस्तस्मै वरं ददिथ तां च वधूमसिक्नीम् ॥ २३-१॥

तस्यात्मजास्त्वयुतमीश पुनः सहस्रं श्रीनारदस्य वचसा तव मार्गमापुः ।
नैकत्रवासमृषये स मुमोच शापं भक्तोत्तमस्त्वृषिरनुग्रहमेव मेने ॥ २३-२॥

षष्ट्या ततो दुहितृभिः सृजतः कुलौघान् दौहित्रसूनुरथ तस्य स विश्वरूपः ।
त्वत्स्तोत्रवर्मितमजापयदिन्द्रमाजौ देव त्वदीयमहिमा खलु सर्वजैत्रः ॥ २३-३॥

प्राक्शूरसेनविषये किल चित्रकेतुः पुत्राग्रही नृपतिरङ्गिरसः प्रभावात् ।
लब्ध्वैकपुत्रमथ तत्र हते सपत्नीसङ्घैरमुह्यदवशस्तव माययासौ ॥ २३-४॥

तं नारदस्तु सममङ्गिरसा दयालुः सम्प्राप्य तावदुपदर्श्य सुतस्य जीवम् ।
कस्यास्मि पुत्र इति तस्य गिरा विमोहं त्यक्त्वा त्वदर्चनविधौ नृपतिं न्ययुङ्क्त ॥ २३-५॥

स्तोत्रं च मन्त्रमपि नारदतोऽथ लब्ध्वा तोषाय शेषवपुषो ननु ते तपस्यन् ।
विद्याधराधिपतितां स हि सप्तरात्रे लब्ध्वाप्यकुण्ठमतिरन्वभजद्भवन्तम् ॥ २३-६॥

तस्मै मृणालधवलेन सहस्रशीर्ष्णा रूपेण बद्धनुतिसिद्धगणावृतेन ।
प्रादुर्भवन्नचिरतो नुतिभिः प्रसन्नो दत्त्वाऽऽत्मतत्त्वमनुगृह्य तिरोदधाथ ॥ २३-७॥

त्वद्भक्तमौलिरथ सोऽपि च लक्षलक्षं वर्षाणि हर्षुलमना भुवनेषु कामम् ।
सङ्गापयन्गुणगणं तव सुन्दरीभिः सङ्गातिरेकरहितो ललितं चचार ॥ २३-८॥

अत्यन्तसङ्गविलयाय भवत्प्रणुन्नो नूनं स रूप्यगिरिमाप्य महत्समाजे ।
निश्शङ्कमङ्ककृतवल्लभमङ्गजारिं तं शङ्करं परिहसन्नुमयाभिशेपे ॥ २३-९॥

निस्सम्भ्रमस्त्वयमयाचितशापमोक्षो वृत्रासुरत्वमुपगम्य सुरेन्द्रयोधी ।
भक्त्याऽऽत्मतत्त्वकथनैस्समरे विचित्रं शत्रोरपि भ्रमममपास्य गतः पदं ते ॥ २३-१०॥

त्वत्सेवनेन दितिरिन्द्रवधोद्यताऽपि तान्प्रत्युतेन्द्रसुहृदो मरुतोऽभिलेभे ।
दुष्टाशयेऽपि शुभदैव भवन्निषेवा तत्तादृशस्त्वमव मां पवनालयेश ॥ २३-११॥

इति त्रयोविंशदशकं समाप्तम् ॥

## चतुर्विंशदशकम् (२४)

प्रह्लादचरितम् ।

## 24 - The Story of Prahlada

हिरण्याक्षे पोत्रीप्रवरवपुषा देव भवता

हते शोकक्रोधग्लपितघृतिरेतस्य सहजः ।

हिरण्यप्रारम्भः कशिपुरमरारातिसदसि

प्रतिज्ञामातेने तव किल वधार्थं मुररिपो ॥ २४-१॥ वरिअतिओन् - मधुरिपो

विधातारं घोरं स खलु तपसित्वा नचिरतः

पुरः साक्षात्कुर्वन्सुरनरमृगाद्यैरनिधनम् ।

वरं लब्ध्वा दृप्तो जगदिह भवन्नायकमिदं

परिक्षुन्दन्निन्द्रादहरत दिवं त्वामगणयन् ॥ २४-२॥

निहन्तुं त्वां भूयस्तव पदमवाप्तस्य च रिपो-

र्बहिर्दृष्टेरन्तर्दधिथ हृदये सूक्ष्मवपुषा ।

नदन्नुच्चैस्तत्राप्यखिलभुवनान्ते च मृगयन्

भिया यातं मत्वा स खलु जितकाशी निववृते ॥ २४-३॥

ततोऽस्य प्रह्लादः समजनि सुतो गर्भवसतौ

मुनेर्वीणापाणेरधिगतभवद्भक्तिमहिमा ।

स वै जात्या दैत्यः शिशुरपि समेत्य त्वयि रतिं

गतस्त्वद्भक्तानां वरद परमोदाहरणताम् ॥ २४-४॥

सुरारीणां हास्यं तव चरणदास्यं निजसुते
स दृष्ट्वा दुष्टात्मा गुरुभिरशिशिक्षच्चिरममुम् ।
गुरुप्रोक्तं चासाविदमिदमभद्राय दृढमि-
त्यपाकुर्वन् सर्वं तव चरणभक्त्यैव ववृधे ॥ २४-५॥

अधीतेषु श्रेष्ठं किमिति परिपृष्टेऽथ तनये
भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः ।
गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन्
वधोपायानस्मिन् व्यतनुत भवत्पादशरणे ॥ २४-६॥

स शूलैराविद्धः सुबहु मथितो दिग्गजगणै-
र्महासर्पैर्दष्टोऽप्यनशनगराहारविधुतः ।
गिरीन्द्रावक्षिप्तोऽप्यहह परमात्मन्नयि विभो
त्वयि न्यस्तात्मत्वात्किमपि न निपीडामभजत ॥ २४-७॥

ततः शङ्काविष्टः स पुनरतिदुष्टोऽस्य जनको
गुरूक्त्या तद्गेहे किल वरुणपाशैस्तमरुणत् ।
गुरोश्चासान्निध्ये स पुनरनुगान्दैत्यतनयान्
भवद्भक्तेस्तत्त्वं परममपि विज्ञानमशिषत् ॥ २४-८॥

पिता शृण्वन्बालप्रकरमखिलं त्वत्स्तुतिपरं
रुषान्धः प्राहैनं कुलहतक कस्ते बलमिति ।
बलं मे वैकुण्ठस्तव च जगतां चापि स बलं

स एव त्रैलोक्यं सकलमिति धीरोऽयमगदीत् ॥ २४-९॥

अरे क्वासौ क्वासौ सकलजगदात्मा हरिरिति
प्रभिन्ते स्म स्तम्भं चलितकरवालो दितिसुतः ।
अतः पश्चाद्विष्णो न हि वदितुमीशोऽस्मि सहसा
कृपात्मन् विश्वात्मन् पवनपुरवासिन् मृडय माम् ॥ २४-१०॥

इति चतुर्विंशदशकं समाप्तम् ॥

## पञ्चविंशदशकम् (२५)

## नरसिंहावतारम् ।

## 25 - Incarnation As Narasimha

स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णय-
न्नाघूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद्रवः ।
श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाप्यश्रुतं
कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टरात् ॥ २५-१॥

दैत्ये दिक्षु विसृष्टचक्षुषि महासंराम्भिणि स्तम्भतः
सम्भूतं न मृगात्मकं न मनुजाकारं वपुस्ते विभो ।
किं किं भीषणमेतदद्भुतमिति व्युद्भ्रान्तचित्तेऽसुरे
विस्फूर्जद्धवलोग्ररोमविकसद्वर्ष्मा समाजृम्भथाः ॥ २५-२॥

तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसर-

प्रोत्कम्पप्रनिकुम्बिताम्बरमहो जीयात्तवेदं वपुः ।

व्यात्तव्याप्तमहादरीसखमुखं खड्गोग्रवद्गन्महा-

जिह्वानिर्गमदृश्यमानसुमहादंष्ट्रायुगोड्डामरम् ॥ २५-३॥

उत्सर्पद्वलिभङ्गभीषणहनुं ह्रस्वस्थवीयस्तर-

ग्रीवं पीवरदोश्शतोद्गतनखक्रूरांशुदूरोल्बणम् ।

व्योमोल्लङ्घिघनाघनोपमघनप्रध्वाननिर्धावित-

स्पर्धालुप्रकरं नमामि भवतस्तन्नारसिंहं वपुः ॥ २५-४॥

नूनं विष्णुरयं निहन्म्यमुमिति भ्राम्यद्गदाभीषणं

दैत्येन्द्रं समुपाद्रवन्तमधृथा दोर्भ्यां पृथुभ्याममुम् ।

वीरो निर्गलितोऽथ खड्गफलके गृह्णन्विचित्रश्रमान्

व्यावृण्वन्पुनरापपात भुवनग्रासोद्यतं त्वामहो ॥ २५-५॥

भ्राम्यन्तं दितिजाधमं पुनरपि प्रोद्गृह्य दोर्भ्यां जवाद्-११

द्वारेऽथोरुयुगे निपात्य नखरान्व्युत्खाय वक्षोभुवि ।

निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बु बद्धोत्सवं

पायं पायमुदैरयो बहुजगत्संहारिसिंहारवान् ॥ २५-६॥

त्यक्त्वा तं हतमाशु रक्तलहरीसिक्तोन्नमद्वर्ष्मणि

प्रत्युत्पत्य समस्तदैत्यपटलीं चाखाद्यमाने त्वयि ।

भ्राम्यद्भूमिविकम्पिताम्बुधिकुलं व्यालोलशैलोत्करं
प्रोत्सर्पत्खचरं चराचरमहो दुःस्थामवस्थां दधौ ॥ २५-७॥

तावन्मांसवपाकरालवपुषं घोरान्त्रमालाधरं
त्वां मध्येसभमिद्धरोषमुषितं दुर्वारगुर्वारवम् ।
अभ्येतुं न शशक कोऽपि भुवने दूरे स्थिता भीरवः
सर्वे शर्वविरिञ्चवासवमुखाः प्रत्येकमस्तोषत ॥ २५-८॥

भूयोऽप्यक्षतरोषधाम्नि भवति ब्रह्माज्ञया बालके
प्रह्लादे पदयोर्नमत्यपभये कारुण्यभाराकुलः ।
शान्तस्त्वं करमस्य मूर्ध्नि समधाः स्तोत्रैरथोद्गायत-१२
स्तस्याकामधियोऽपि तेनिथ वरं लोकाय चानुग्रहम् ॥ २५-९॥

एवं नाटितरौद्रचेष्टित विभो श्रीतापनीयाभिध
श्रुत्यन्तस्फुटगीतसर्वमहिमन्नत्यन्तशुद्धाकृते ।
तत्तादृङ्निखिलोत्तरं पुनरहो कस्त्वां परो लङ्घयेत्
प्रह्लादप्रिय हे मरुत्पुरपते सर्वामयात्पाहि माम् ॥ २५-१०॥

इति पञ्चविंशदशकं समाप्तम् ॥

षड्विंशदशकम् (२६)

गजेन्द्रमोक्षम् ।

## 26 - The Liberation of Gajendra

इन्द्रद्युम्नः पाण्ड्यखण्डाधिराजस्त्वद्भक्तात्मा चन्दनाद्रौ कदाचित् ।
त्वत्सेवायां मग्नधीरालुलोके नैवागस्त्यं प्राप्तमातिथ्यकामम् ॥ २६-१॥

कुम्भोद्भूतिस्सम्भृतक्रोधभारः स्तब्धात्मा त्वं हस्तिभूयं भजेति ।
शप्त्वाथैनं प्रत्यगात्सोऽपि लेभे हस्तीन्द्रत्वं त्वत्स्मृतिव्यक्तिधन्यम् ॥ २६-२॥

दुग्धाम्भोधेर्मध्यभाजि त्रिकूटे क्रीडन् शैले यूथपोऽयं वशाभिः ।
सर्वान्जन्तूनत्यवर्तिष्ट शक्त्या त्वद्भक्तानां कुत्र नोत्कर्षलाभः ॥ २६-३॥

स्वेन स्थेम्ना दिव्यदेहत्वशक्त्या सोऽयं खेदानप्रजानन् कदाचित् ।
शैलप्रान्ते घर्मतान्तः सरस्यां यूथैः सार्धं त्वत्प्रणुन्नोऽभिरेमे ॥ २६-४॥

हूहूस्तावद्देवलस्यापि शापद्ग्राहीभूतस्तज्जले वर्तमानः ।
जग्राहैनं हस्तिनं पाददेशे शान्त्यर्थं हि श्रान्तिदोऽसि स्वकानाम् ॥ २६-५॥

त्वत्सेवाया वैभवाद्दुर्निरोधं युध्यन्तं तं वत्सराणां सहस्रम् ।
प्राप्ते काले त्वत्पदैकाग्र्यसिद्ध्यै नक्राक्रान्तं हस्तिवर्यं व्यधास्त्वम् ॥ २६-६॥१३

आर्तिव्यक्तप्राक्तनज्ञानभक्तिः शुण्डोत्क्षिप्तैः पुण्डरीकैस्समर्चन् ।
पूर्वाभ्यस्तं निर्विशेषात्मनिष्ठं स्तोत्रश्रेष्ठं सोऽन्वगादीत्परात्मन् ॥ २६-७॥

श्रुत्वा स्तोत्रं निर्गुणस्थं समस्तं ब्रह्मेशाद्यैर्नाहमित्यप्रयाते ।
सर्वात्मा त्वं भूरिकारुण्यवेगात्ताक्ष्यारूढः प्रेक्षितोऽभूः पुरस्तात् ॥ २६-८॥

हस्तीन्द्रं तं हस्तपद्मेन धृत्वा चक्रेण त्वं नक्रवर्यं व्यदारीः ।
गन्धर्वेऽस्मिन्मुक्तशापे स हस्ती त्वत्सारूप्यं प्राप्य देदीप्यते स्म ॥ २६-९॥

एतद्वृत्तं त्वां च मां च प्रगे यो गायेत्सोऽयं भूयसे श्रेयसे स्यात् ।
इत्युक्त्वैनं तेन सार्धं गतस्त्वं धिष्ण्यं विष्णो पाहि वातालयेश ॥ २६-१०॥

इति षड्विंशदशकं समाप्तम् ॥

## सप्तविंशदशकम् (२७)

## क्षीराब्धिमथनं तथा कूर्मावतारम् ।

## 27 - Churning of the Milk Ocean and Tortoise Incarnation

दुर्वासास्सुरवनिताऽऽप्तदिव्यमाल्यं शक्राय स्वयमुपदाय तत्र भूयः ।
नागेन्द्रप्रतिमृदिते शशाप शक्रं का क्षान्तिस्त्वदितरदेवतांशजानाम् ॥ २७-१॥

शापेन प्रथितजरेऽथ निर्जरेन्द्रे देवेष्वप्यसुरजितेषु निष्प्रभेषु ।
शर्वाद्याः कमलजमेत्य सर्वदेवा निर्वाणप्रभव समं भवन्तमापुः ॥ २७-२॥

ब्रह्माद्यैः स्तुतमहिमा चिरं तदानीं प्रादुष्षन्वरद पुरः परेण धाम्ना ।

हे देवा दितिजकुलैर्विधाय सन्धिं पीयूषं परिमथतेति पर्यशास्त्वम् ॥ २७-३॥

सन्धानं कृतवति दानवैः सुरौघे मन्थानं नयति मदेन मन्दराद्रिम् ।
भ्रष्टेऽस्मिन्बदरमिवोद्वहन्खगेन्द्रे सद्यस्त्वं विनिहितवान् पयःपयोधौ ॥ २७-४॥

आधाय द्रुतमथ वासुकिं वरत्रां पाथोधौ विनिहितसर्वबीजजाले ।
प्रारब्धे मथनविधौ सुरासुरैस्तैर्व्याजात्त्वं भुजगमुखेऽकरोः सुरारीन् ॥ २७-५॥

क्षुब्धाद्रौ क्षुभितजलोदरे तदानीं दुग्धाब्धौ गुरुतरभारतो निमग्ने ।
देवेषु व्यथिततमेषु तत्प्रियैषी प्राणैषीः कमठतनुं कठोरपृष्ठाम् ॥ २७-६॥

वज्रातिस्थिरतरकर्परेण विष्णो विस्तारात्परिगतलक्षयोजनेन ।
अम्भोधेः कुहरगतेन वर्ष्मणा त्वं निर्मग्नं क्षितिधरनाथमुन्निनेथ ॥ २७-७॥

उन्मग्ने झटिति तदा धराधरेन्द्रे निर्मेथुर्दृढमिह सम्मदेन सर्वे ।
आविश्य द्वितयगणेऽपि सर्पराजे वैवश्यं परिशमयन्नवीवृधस्तान् ॥ २७-८॥

उद्दामभ्रमणजवोन्नमद्गिरीन्द्रन्यस्तैकस्थिरतरहस्तपङ्कजं त्वाम् ।
अभ्रान्ते विधिगिरिशादयः प्रमोदादुद्भ्रान्ता नुनुवुरुपात्तपुष्पवर्षाः ॥ २७-९॥

दैत्यौघे भुजगमुखानिलेन तप्ते तेनैव त्रिदशकुलेऽपि किञ्चिदार्ते ।
कारुण्यात्तव किल देव वारिवाहाः प्रावर्षन्नमरगणान्न दैत्यसङ्घान् ॥ २७-१०॥

उद्भ्राम्यद्बहुतिमिनक्रचक्रवाले तत्राब्धौ चिरमथितेऽपि निर्विकारे ।
एकस्त्वं करयुगकृष्टसर्पराजः संराजन् पवनपुरेश पाहि रोगात् ॥ २७-११॥

इति सप्तविंशदशकं समाप्तम् ॥

## अष्टाविंशदशकम् (२८)

### लक्ष्मीस्वयंवरं तथा अमृतोत्पत्तिः ।

### 28 - Self-Choice Marriage of Lakshmi and Emergence of Nectar.

गरलं तरलानलं पुरस्ताज्जलधेरुद्विजगाल कालकूटम् ।
अमरस्तुतिवादमोदनिघ्नो गिरिशस्तन्निपपौ भवत्प्रियार्थम् ॥ २८-१॥

विमथत्सु सुरासुरेषु जाता सुरभिस्तामृषिषु न्यधास्त्रिधामन् ।
हयरत्नमभूदथेभरत्नं द्युतरुश्चाप्सरसः सुरेषु तानि ॥ २८-२॥

जगदीश भवत्परा तदानीं कमनीया कमला बभूव देवी ।
अमलामवलोक्य यां विलोकः सकलोऽपि स्पृहयाम्बभूव लोकः ॥ २८-३॥

त्वयि दत्तहृदे तदैव देव्यै त्रिदशेन्द्रो मणिपीठिकां व्यतारीत् ।१४
सकलोपहृताभिषेचनीयैरृषयस्तां श्रुतिगीर्भिरभ्यषिञ्चन् ॥ २८-४॥

अभिषेकजलानुपातिमुग्धत्वदपाङ्गैरवभूषिताङ्गवल्लीम् ।

मणिकुण्डलपीतचेलहारप्रमुखैस्तामिमरादयोऽन्वभूषन् ॥ २८-५॥

वरणस्रजमात्तभृङ्गनादां दधती सा कुचकुम्भमन्दयाना ।
पदशिञ्जितमञ्जुनूपुरा त्वां कलितव्रीलविलासमाससाद ॥ २८-६॥

गिरिशद्रुहिणादिसर्वदेवान् गुणभाजोऽप्यविमुक्तदोषलेशान् ।
अवमृश्य सदैव सर्वरम्ये निहिता त्वय्यनयापि दिव्यमाला ॥ २८-७॥

उरसा तरसा ममानिथैनां भुवनानां जननीमनन्यभावाम् ।
त्वदुरोविलसत्तदीक्षणश्री परिवृष्ट्या परिपुष्टमास विश्वम् ॥ २८-८॥

अतिमोहनविभ्रमा तदानीं मदयन्ती खलु वारुणी निरागात् ।
तमसः पदवीमदास्त्वमेनामतिसम्माननया महासुरेभ्यः ॥ २८-९॥

तरुणाम्बुदसुन्दरस्तदा त्वं ननु धन्वन्तरिरुत्थितोऽम्बुराशेः ।
अमृतं कलशे वहन्कराभ्यामखिलार्तिं हर मारुतालयेश ॥ २८-१०॥

इति अष्टाविंशदशकं समाप्तम् ॥

## एकोनत्रिंशदशकम् (२९)

## मोहिन्यवतारं आदि ।

## 29 - Mohini Incarnation, Etc

उद्गच्छतस्तव करादमृतं हरत्सु दैत्येषु तानशरणाननुनीय देवान् ।
सद्यस्तिरोदधिथ देव भवत्प्रभावादुद्यत्सयूथ्यकलहा दितिजा बभूवुः ॥ २९-१॥

श्यामां रुचापि वयसापि तनुं तदानीं प्राप्तोऽसि तुङ्गकुचमण्डलभङ्गुरां त्वम् ।
पीयुषकुम्भकलहं परिमुच्य सर्वे तृष्णाकुलाः प्रतिययुस्त्वदुरोजकुम्भे ॥ २९-२॥

का त्वं मृगाक्षि विभजस्व सुधामिमामित्यारूढरागविवशानभियाचतोऽमून् ।
विश्वस्यते मयि कथं कुलटास्मि दैत्या इत्यालपन्नपि सुविश्वसितानतानीः ॥ २९-३॥

मोदात्सुधाकलशमेषु ददत्सु सा त्वं दुश्चेष्टितं मम सहध्वमिति ब्रुवाणा ।
पङ्क्तिप्रभेदविनिवेशितदेवदैत्या लीलाविलासगतिभिः समदाः सुधां ताम् ॥ २९-४॥

अस्मास्वियं प्रणयिनीत्यसुरेषु तेषु जोषं स्थितेष्वथ समाप्य सुधां सुरेषु ।१५
त्वं भक्तलोकवशगो निजरूपमेत्य स्वर्भानुमर्धपरिपीतसुधं व्यलावीः ॥ २९-५॥

त्वत्तः सुधाहरणयोग्यफलं परेषु दत्त्वा गते त्वयि सुरैः खलु ते व्यगृह्णन् ।
घोरेऽथ मूर्छति रणे बलिदैत्यमायाव्यामोहिते सुरगणे त्वमिहाविरासीः ॥ २९-६॥

त्वं कालनेमिमथ मालिमुखाञ्जघन्थ शक्रो जघान बलिजम्भवलान् सपाकान् ।१६
शुष्कार्द्रदुष्करवधे नमुचौ च लूने फेनेन नारदगिरा न्यरुणो रणं त्वम् ॥ २९-७॥

योषावपुर्दनुजमोहनमाहितं ते श्रुत्वा विलोकनकुतूहलवान्महेशः ।

भूतैस्समं गिरिजया च गतः पदं ते स्तुत्वाब्रवीदभिमतं त्वमथो तिरोधाः ॥ २९-८॥

आरामसीमनि च कन्दुकघातलीलालोलायमाननयनां कमनीं मनोज्ञाम् ।
त्वामेष वीक्ष्य विगलद्वसनां मनोभूवेगादनङ्गरिपुरङ्ग समालिलिङ्ग ॥ २९-९॥

भूयोऽपि विद्रुतवतीमुपधाव्य देवो वीर्यप्रमोक्षविकसत्परमार्थबोधः ।
त्वन्मानितस्तव महत्वमुवाच देव्यै तत्तादृशस्त्वमव वातनिकेतनाथ ॥ २९-१०॥

इति एकोनत्रिंशदशकं समाप्तम् ॥

## त्रिंशदशकम् (३०)

## वामनावतारम् ।

## 30 - Vamana Incarnation

शक्रेण संयति हतोऽपि बलिर्महात्मा शुक्रेण जीविततनुः क्रतुवर्धितोष्मा ।
विक्रान्तिमान् भयनिलीनसुरां त्रिलोकीं चक्रे वशे स तव चक्रमुखादभीतः ॥ ३०-१॥

पुत्रार्तिदर्शनवशाददितिर्विषण्णा तं काश्यपं निजपतिं शरणं प्रपन्ना ।
त्वत्पूजनं तदुदितं हि पयोव्रताख्यं सा द्वादशाहमचरत्त्वयि भक्तिपूर्णा ॥ ३०-२॥

तस्यावधौ त्वयि निलीनमतेरमुष्याः श्यामश्चतुर्भुजवपुः स्वयमाविरासीः ।
नम्रां च तामिह भवत्तनयो भवेयं गोप्यं मदीक्षणमिति प्रलपन्नयासीः ॥ ३०-३॥

त्वं काश्यपे तपसि सन्निदधत्तदानीं प्राप्तोऽसि गर्भमदितेः प्रणुतो विधात्रा ।
प्रासूत च प्रकटवैष्णवदिव्यरूपं सा द्वादशीश्रवणपुण्यदिने भवन्तम् ॥ ३०-४॥

पुण्याश्रमं तमभिवर्षति पुष्पवर्षैर्हर्षाकुले सुरकुले कृततूर्यघोषे ।
बद्ध्वाञ्जलिं जय जयेति नुतः पितृभ्यां त्वं तत्क्षणे पटुतमं वटुरूपमाधाः ॥ ३०-५॥ १७

तावत्प्रजापतिमुखैरुपनीय मौञ्जीदण्डाजिनाक्षवलयादिभिरर्च्यमानः ।
देदीप्यमानवपुरीश कृताग्निकार्यस्त्वं प्रास्थिथा बलिगृहं प्रकृताश्वमेधम् ॥ ३०-६॥

गात्रेण भाविमहिमोचितगौरवं प्राग्व्यावृण्वतेव धरणीं चलयन्नयासीः ।
छत्रं परोष्मतिरणार्थमिवादधानो दण्डं च दानवजनेष्विव सन्निधातुम् ॥ ३०-७॥

तां नर्मदोत्तरतटे हयमेधशालामासेदुषि त्वयि रुचा तव रुद्धनेत्रैः ।
भास्वान्किमेष दहनो नु सनत्कुमारो योगी नु कोऽयमिति शुक्रमुखैः शशङ्के ॥ ३०-८॥

आनीतमाशु भृगुभिर्महसाभिभूतैस्त्वां रम्यरूपमसुरः पुलकावृताङ्गः ।
भक्त्या समेत्य सुकृती परिषिच्य पादौ तत्तोयमन्वधृत मूर्धति तीर्थतीर्थम् ॥ ३०-९॥

प्रह्लादवंशजतया क्रतुभिर्द्विजेषु विश्वासतो नु तदिदं दितिजोऽपि लेभे ।
यत्ते पदाम्बु गिरिशस्य शिरोभिलाल्यं स त्वं विभो गुरुपुरालय पालयेथाः ॥ ३०-१०॥

इति त्रिंशदशकं समाप्तम् ॥

## एकत्रिंशदशकम् (३१)

## बलिदर्पहरणम् ।

## 31 - Humbling of Bali

प्रीत्या दैत्यस्तव तनुमहःप्रेक्षणात्सर्वथाऽपि
त्वामाराध्यन्नजित रचयन्नञ्जलिं सञ्जगाद ।
मत्तः किं ते समभिलषितं विप्रसूनो वद त्वं
वित्तं भक्तं भवनमवनीं वापि सर्वं प्रदास्ये ॥ ३१-१॥

तामक्षीणां बलिगिरमुपाकर्ण्य कारुण्यपूर्णोऽ-
प्यस्योत्सेकं शमयितुमना दैत्यवंशं प्रशंसन् ।
भूमिं पादत्रयपरिमितां प्रार्थयामासिथ त्वं
सर्वं देहीति तु निगदिते कस्य हास्यं न वा स्यात् ॥ ३१-२॥

विश्वेशं मां त्रिपदमिह किं याचसे बालिशस्त्वं
सर्वां भूमिं वृणु किममुनेत्यालपत्त्वां स दृप्यन् ।
यस्माद्दर्पात्त्रिपदपरिपूर्त्यक्षमः क्षेपवादान्
बन्धं चासावगमदतदर्होऽपि गाढोपशान्त्यै ॥ ३१-३॥

पादत्रय्या यदि न मुदितो विष्टपैर्नापि तुष्ये-
दित्युक्तेऽस्मिन्वरद भवते दातुकामेऽथ तोयम् ।

दैत्याचार्यस्तव खलु परीक्षार्थिनः प्रेरणात्तं
मा मा देयं हरिरयमिति व्यक्तमेवाबभाषे ॥ ३१-४॥

याचत्येवं यदि स भगवान्पूर्णकामोऽस्मि सोऽहं
दास्याम्येव स्थिरमिति वदन् काव्यशप्तोऽपि दैत्यः ।
विन्ध्यावल्या निजदयितया दत्तपाद्याय तुभ्यं
चित्रं चित्रं सकलमपि स प्रार्पयत्तोयपूर्वम् ॥ ३१-५॥

निस्सन्देहं दितिकुलपतौ त्वय्यशेषार्पणं तद्-
व्यातन्वाने मुमुचुरृषयः सामराः पुष्पवर्षम् ।
दिव्यं रूपं तव च तदिदं पश्यतां विश्वभाजा-
मुच्चैरुच्चैरवृधदवधीकृत्य विश्वाण्डभाण्डम् ॥ ३१-६॥

त्वत्पादाग्रं निजपदगतं पुण्डरीकोद्भवोऽसौ
कुण्डीतोयैरसिचदपुनाद्यज्जलं विश्वलोकान् ।
हर्षोत्कर्षात्सुबहु ननृते खेचरैरुत्सवेऽस्मिन्
भेरीं निघ्नन् भुवनमचरज्जाम्बवान् भक्तिशाली ॥ ३१-७॥

तावद्दैत्यास्त्वनुमतिमृते भर्तुरारब्धयुद्धा
देवोपेतैर्भवदनुचरैः सङ्गता भङ्गमापन् ।
कालात्मायं वसति पुरतो यद्वशात्प्राग्जिताः स्मः
किं वो युद्धैरिति बलिगिरा तेऽथ पातालमापुः ॥ ३१-८॥

पाशैर्बद्धं पतगपतिना दैत्यमुच्चैरवादी-
स्तार्त्तीयीकं दिश मम पदं किं न विश्वेश्वरोऽसि ।
पादं मूर्ध्नि प्रणय भगवन्नित्यकम्पं वदन्तं
प्रह्लादस्तं स्वयमुपगतो मानयन्नस्तवीत्त्वाम् ॥ ३१-९॥

दर्पोच्छित्त्यै विहितमखिलं दैत्य सिद्धोऽसि पुण्यै-
र्लोकस्तेऽस्तु त्रिदिवविजयी वासवत्वं च पश्चात् ।
मत्सायुज्यं भज च पुनरित्यन्वगृह्णा बलिं तं
विप्रैस्सन्तानितमखवरः पाहि वातालयेश ॥ ३१-१०॥

इति एकत्रिंशदशकं समाप्तम् ॥

द्वात्रिंशदशकम् (३२)

मत्स्यावतारम् ।

32 - Matsya Avatar

पुरा हयग्रीवमहासुरेण षष्ठान्तरान्तोद्यदकाण्डकल्पे ।
निद्रोन्मुखब्रह्ममुखाद्धृतेषु वेदेष्वधित्सः किल मत्स्यरूपम् ॥ ३२-१॥

सत्यव्रतस्य द्रमिळाधिभर्तुर्नदीजले तर्पयतस्तदानीम् ।
कराञ्जलौ सञ्ज्वलिताकृतिस्त्वमदृश्यथाः कश्चन बालमीनः ॥ ३२-२॥

क्षिप्तं जले त्वां चकितं विलोक्य निन्येऽम्बुपात्रेण मुनिः स्वगेहम् ।
स्वल्पैरहोभिः कलशीं च कूपं वापीं सरश्चानशिषे विभो त्वम् ॥ ३२-३॥

योगप्रभावाद्भवदाज्ञयैव नीतस्ततस्त्वं मुनिना पयोधिम् ।
पृष्टोऽमुना कल्पदिदृक्षुमेनं सप्ताहमास्वेति वदन्नयासीः ॥ ३२-४॥

प्राप्ते त्वदुक्तेऽहनि वारिधारापरिप्लुते भूमितले मुनीन्द्रः ।
सप्तर्षिभिः सार्धमपारवारिण्युद्घूर्णमानः शरणं ययौ त्वाम् ॥ ३२-५॥

धरां त्वदादेशकरीमवाप्तां नौरूपिणीमारुरुहुस्तदा ते ।
तत्कम्पकम्प्रेषु च तेषु भूयस्त्वमम्बुधेराविरभूर्महीयान् ॥ ३२-६॥

झषाकृतिं योजनलक्षदीर्घां दधानमुच्चैस्तरतेजसं त्वाम् ।
निरीक्ष्य तुष्टा मुनयस्त्वदुक्त्या त्वत्तुङ्गशृङ्गे तरणिं बबन्धुः ॥ ३२-७॥

आकृष्टनौको मुनिमण्डलाय प्रदर्शयन्विश्वजगद्विभागान् ।
संस्तूयमानो नृवरेण तेन ज्ञानं परं चोपदिशन्नचारीः ॥ ३२-८॥

कल्पावधौ सप्तमुनीन्पुरोवत्प्रस्थाप्य सत्यव्रतभूमिपं तम् ।
वैवस्वताख्यं मनुमादधानः क्रोधाद्धयग्रीवमभिद्रुतोऽभूः ॥ ३२-९॥

स्वतुङ्गशृङ्गक्षतवक्षसं तं निपात्य दैत्यं निगमान्गृहीत्वा ।
विरिञ्चये प्रीतहृदे ददानः प्रभञ्जनागारपते प्रपायाः ॥ ३२-१०॥

इति द्वात्रिंशदशकं समाप्तम् ॥

## त्रयस्त्रिंशदशकम् (३३)

## अम्बरीषचरितम् ।

## 33 - The Story of Ambarisha

वैवस्वताख्यमनुपुत्रनभागजातनाभागनामकनरेन्द्रसुतोऽम्बरीषः ।
सप्तार्णवावृतमहीदयितोऽपि रेमे त्वत्सङ्गिषु त्वयि च मग्नमनास्सदैव ॥ ३३-१॥

त्वत्प्रीतये सकलमेव वितन्वतोऽस्य भक्त्यैव देव नचिरादभृथाः प्रसादम् ।
येनास्य याचनमृतेऽप्यभिरक्षणार्थं चक्रं भवान्प्रवितातार सहस्रधारम् ॥ ३३-२॥

स द्वादशीव्रतमथो भवदर्चनार्थं वर्षं दधौ मधुवने यमुनोपकण्ठे ।
पत्न्या समं सुमनसा महतीं वितन्वन् पूजां द्विजेषु विसृजन्पशुषष्टिकोटिम् ॥ ३३-३॥

तत्राथ पारणदिने भवदर्चनान्ते दुर्वाससाऽस्य मुनिना भवनं प्रपेदे ।
भोक्तुं वृतश्च स नृपेण परार्तिशीलो मन्दं जगाम यमुनां नियमान्विधास्यन् ॥ ३३-४॥

राज्ञाथ पारणमुहूर्तसमाप्तिखेदाद्वारैव पारणमकारि भवत्परेण ।
प्राप्तो मुनिस्तदथ दिव्यदृशा विजानन् क्षिप्यन् क्रुधोद्धृतजटो विततान कृत्याम् ॥ ३३-५॥

कृत्यां च तामसिधरां भुवनं दहन्तीमग्रेऽभिवीक्ष्य नृपतिर्न पदाच्चकम्पे ।
त्वद्भक्तबाधमभिवीक्ष्य सुदर्शनं ते कृत्यानलं शलभयन्मुनिमन्वधावीत् ॥ ३३-६॥

धावन्नशेषभुवनेषु भिया स पश्यन् विश्वत्र चक्रमपि ते गतवान्विरिञ्चम् ।
कः कालचक्रमतिलङ्घयतीत्यपास्तः शर्वं ययौ स च भवन्तमवन्दतैव ॥ ३३-७॥

भूयो भवन्निलयमेत्य मुनिं नमन्तं प्रोचे भवानहमृषे ननु भक्तदासः ।
ज्ञानं तपश्च विनयान्वितमेव मान्यं याह्यम्बरीषपदमेव भजेति भूमन् ॥ ३३-८॥

तावत्समेत्य मुनिना स गृहीतपादो राजाऽपसृत्य भवदस्त्रमसावनौषीत् ।
चक्रे गते मुनिरदादखिलाशिषोऽस्मै त्वद्भक्तिमागसि कृतेऽपि कृपां च शंसन् ॥ ३३-९॥

राजा प्रतीक्ष्य मुनिमेकसमामनाश्वान् सम्भोज्य साधु तमृषिं विसृजन्प्रसन्नम् ।
भुक्त्वा स्वयं त्वयि ततोऽपि दृढं रतोऽभूत् सायुज्यमाप च स मां पवनेश पायाः ॥ ३३-१०॥

इति त्रयस्त्रिंशदशकं समाप्तम् ॥

## चतुस्त्रिंशदशकम् (३४)

## श्रीरामावतारम्-१

## 34 - Sri Rama Avatar-1

गीर्वाणैरर्थ्यमानो दशमुखनिधनं कोसलेऽष्वृष्यशृङ्गे

पुत्रीयामिष्टिमिष्ट्वा ददुषि दशरथक्ष्माभृते पायसाग्र्यम् ।
तद्भुक्त्या तत्पुरन्ध्रीष्वपि तिसृषु समं जातगर्भासु जातो
रामस्त्वं लक्ष्मणेन स्वयमथ भरतेनापि शत्रुघ्ननाम्ना ॥ ३४-१॥

कोदण्डी कौशिकस्य क्रतुवरमवितुं लक्ष्मणेनानुयातो
यातोऽभूस्तातवाचा मुनिकथितमनुद्वन्द्वशान्ताध्वखेदः ।
नृणां त्राणाय बाणैर्मुनिवचनबलात्ताटकां पाटयित्वा
लब्ध्वास्मादस्त्रजालं मुनिवनमगमो देव सिद्धाश्रमाख्यम् ॥ ३४-२॥

मारीचं द्रावयित्वा मखशिरसि शरैरन्यरक्षांसि निघ्नन्
कल्यां कुर्वन्नहल्यां पथि पदरजसा प्राप्य वैदेहगेहम् ।
भिन्दानश्चान्द्रचूडं धनुरवनिसुतामिन्दिरामेव लब्ध्वा
राज्यं प्रातिष्ठथास्त्वं त्रिभिरपि च समं भ्रातृवीरैः सदारैः ॥ ३४-३॥

आरुन्धाने रुषान्धे भृगुकुलतिलके सङ्क्रमय्य स्वतेजो
याते यातोऽस्ययोध्यां सुखमिह निवसन्कान्तया कान्तमूर्ते ।
शत्रुघ्नेनैकदाथो गतवति भरते मातुलस्याधिवासं
तातारब्धोऽभिषेकस्तव किल विहतः केकयाधीशपुत्र्या ॥ ३४-४॥

तातोक्त्या यातुकामो वनमनुजवधूसंयुतश्चापधारः
पौरानारुध्य मार्गे गुहनिलयगतस्त्वं जटाचीरधारी ।
नावा सन्तीर्य गङ्गामधिपदवि पुनस्तं भरद्वाजमारा-
न्नत्वा तद्वाक्यहेतोरतिसुखमवसश्चित्रकूटे गिरीन्द्रे ॥ ३४-५॥

श्रुत्वा पुत्रार्तिखिन्नं खलु भरतमुखात्स्वर्गयातं स्वतातं
तप्तो दत्त्वाम्बु तस्मै निदधिथ भरते पादुकां मेदिनीं च ।
अत्रिं नत्वाथ गत्वा वनमतिविपुलां दण्डकं चण्डकायं
हत्वा दैत्यं विराधं सुगतिमकलयश्चारु भोः शारभङ्गीम् ॥ ३४-६॥

नत्वाऽगस्त्यं समस्ताशरनिकरसपत्राकृतिं तापसेभ्यः
प्रत्यश्रौषीः प्रियैषी तदनु च मुनिना वैष्णवे दिव्यचापे ।
ब्रह्मास्त्रे चापि दत्ते पथि पितृसुहृदं वीक्ष्य भूयो जटायुं
मोदाद्गोदातटान्ते परिरमसि पुरा पञ्चवट्यां वधूट्या ॥ ३४-७॥

प्राप्तायाः शूर्पणख्या मदनचलधृतेरर्थनैर्निस्सहात्मा
तां सौमित्रौ विसृज्य प्रबलतमरुषा तेन निर्लूननासाम् ।
दृष्ट्वैनां रुष्टचित्तं खरमभिपतितं दुषणं च त्रिमूर्धं
व्याहिंसीराशरानप्ययुतसमधिकांस्तत्क्षणादक्षतोष्मा ॥ ३४-८॥

सोदर्या प्रोक्तवार्ताविवशदशमुखादिष्टमारीचमाया-
सारङ्गं सारसाक्ष्या स्पृहितमनुगतः प्रावधीर्बाणघातम् ।
तन्मायाक्रन्दनिर्यापितभवदनुजां रावणस्तामहार्षीत्
तेनार्तोऽपि त्वमन्तः किमपि मुदमधास्तद्वधोपायायलाभात् ॥ ३४-९॥

भूयस्तन्वीं विचिन्वन्नहृत दशमुखस्त्वद्वधूं मद्वधेने-
त्युक्त्वा याते जटायौ दिवमथ सुहृदः प्रातनोः प्रेतकार्यम् ।

गृह्णानं तं कबन्धं जघनिथ शबरीं प्रेक्ष्य पम्पातटे त्वं

सम्प्राप्तो वातसूनुं भृशमुदितमनाः पाहि वातालयेश ॥ ३४-१०॥

इति चतुस्त्रिंशदशकं समाप्तम् ॥

पञ्चत्रिंशदशकम् (३५)

श्रीरामावतारम्-२

35 - Sri Rama Avatar contd.

नीतस्सुग्रीवमैत्रीं तदनु हनुमता दुन्दुभेः कायमुच्चैः

क्षिप्त्वाङ्गुष्ठेन भूयो लुलविथ युगपत्पत्रिणा सप्त सालान् ।

हत्वा सुग्रीवघातोद्यतमतुलबलं वालिनं व्याजवृत्त्या

वर्षावेलामनैषीर्विरहतरलितस्त्वं मतङ्गाश्रमान्ते ॥ ३५-१॥

सुग्रीवेणानुजोक्त्या सभयमभियता व्यूहितां वाहिनीं ता-

मृक्षाणां वीक्ष्य दिक्षु द्रुतमथ दयितामार्गणायावनम्राम् ।

सन्देशं चाङ्गुलीयं पवनसुतकरे प्रादिशो मोदशाली

मार्गे मार्गे ममार्गे कपिभिरपि तदा त्वत्प्रिया सप्रयासैः ॥ ३५-२॥

त्वद्वार्ताकर्णनोद्यद्गरुदुरुजवसम्पातिसम्पातिवाक्य-

प्रोत्तीर्णार्णोधिरन्तर्नगरि जनकजां वीक्ष्य दत्त्वाऽङ्गुलीयम् ।

प्रक्षुद्योद्यानमक्षक्षपणचणरणः सोढबन्धो दशास्यं

दृष्ट्वा प्लुष्ट्वा च लङ्कां झटिति स हनुमान्मौलिरत्नं ददौ ते ॥ ३५-३॥

त्वं सुग्रीवाङ्गदादिप्रबलकपिचमूचक्रविक्रान्तभूमी-
चक्रोऽभिक्रम्य पारेजलधि निशिचरेन्द्रानुजाश्रीयमाणः ।
तत्प्रोक्तां शत्रुवार्तां रहसि निशमयन्प्रार्थनापार्थ्यरोष-
प्रास्ताग्नेयास्त्रतेजस्त्रसदुदधिगिरा लब्धवान्मध्यमार्गम् ॥ ३५-४॥

कीशैराशान्तरोपाहृतगिरिनिकरैः सेतुमाधाप्य यातो
यातून्यामर्द्य दंष्ट्रानखशिखरिशिलासालशस्त्रैः स्वसैन्यैः ।
व्याकुर्वन्सानुजस्त्वं समरभुवि परं विक्रमं शक्रजेत्रा
वेगान्नागास्त्रबद्धः पतगपतिगरुन्मारुतैर्मोचितोऽभूः ॥ ३५-५॥

सौमित्रिस्त्वत्र शक्तिप्रहृतिगलदसुर्वातजानीतशैल-
घ्राणात्प्रणानुपेतो व्यकृणुत कुसृतिश्लाघिनं मेघनादम् ।
मायाक्षोभेषु वैभीषणवचनहृतस्तम्भनः कुम्भकर्णं
सम्प्राप्तं कम्पितोर्वीतलमखिलचमूभक्षिणं व्यक्षिणोस्त्वम् ॥ ३४-६॥

गृह्णन् जम्भारिसम्प्रेषितरथकवचौ रावणेनाभियुध्यन्
ब्रह्मास्त्रेणास्य भिन्दन् गलततिमबलामग्निशुद्धां प्रगृह्णन् ।
देवश्रेणीवरोज्जीवितसमरमृतैरक्षतैरृक्षसङ्घै-
र्लङ्काभर्त्रा च साकं निजनगरमगाः सप्रियः पुष्पकेण ॥ ३५-७॥

प्रीतो दिव्याभिषेकैरयुतसमधिकान्वत्सरान्पर्यरंसी-

मैथिल्यां पापवाचा शिव शिव किल तां गर्भिणीमभ्यहासीः ।
शत्रुघ्नेनार्दयित्वा लवणनिशिचरं प्रार्दयः शूद्रपाशं
तावद्वाल्मीकिगेहे कृतवसतिरुपासूत सीता सुतौ ते ॥ ३५-८॥

वाल्मीकेस्त्वत्सुतोद्गापितमधुरकृतेराज्ञया यज्ञवाटे
सीतां त्वय्याप्तुकामे क्षितिमविशदसौ त्वं च कालार्थितोऽभूः ।
हेतोः सौमित्रिघाती स्वयमथ सरयूमग्ननिश्शेषभृत्यैः
साकं नाकं प्रयातो निजपदमगमो देव वैकुण्ठमाद्यम् ॥ ३५-९॥

सोऽयं मर्त्यावतारस्तव खलु नियतं मर्त्यशिक्षार्थमेवं
विश्लेषार्तिर्निरागस्त्यजनमपि भवेत्कामधर्मातिसक्त्या ।
नो चेत्स्वात्मानुभूतेः क्वनु तव मनसो विक्रिया चक्रपाणे
स त्वं सत्त्वैकमूर्ते पवनपुरपते व्याधुनु व्याधितापान् ॥ ३५-१०॥

इति पञ्चत्रिंशदशकं समाप्तम् ॥

षट्त्रिंशदशकम् (३६)

परशुरामावतारम् ।

36 - Parasurama Avatar

अत्रेः पुत्रतया पुरा त्वमनसूयायां हि दत्ताभिधो
जातः शिष्यनिबन्धतन्द्रितमनाः स्वस्थश्चरन्कान्तया ।१८

दृष्टो भक्ततमेन हेहयमहीपालेन तस्मै वरा-
नष्टैश्वर्यमुखान्प्रदाय ददिथ स्वेनैव चान्ते वधम् ॥ ३६-१॥

सत्यं कर्तुमथार्जुनस्य च वरं तच्छक्तिमात्रानतं
ब्रह्मद्वेषि तदाखिलं नृपकुलं हन्तुं च भूमेर्भरम् ।
सञ्जातो जमदग्नितो भृगुकुले त्वं रेणुकायां हरे
रामो नाम तदात्मजेष्ववरजः पित्रोरधाः सम्मदम् ॥ ३६-२॥

लब्धाम्नायगणश्चतुर्दशवया गन्धर्वराजे मना-
गासक्तां किल मातरं प्रति पितुः क्रोधाकुलस्याज्ञया ।
ताताज्ञातिगसोदरैः सममिमां छित्वाथ शान्तात्पितु-
स्तेषां जीवनयोगमापिथ वरं माता च तेऽदाद्वरान् ॥ ३६-३॥

पित्रा मातृमुदे स्तवाहृतवियद्धेनोर्निजादाश्रमात्
प्रस्थायाथ भृगोर्गिरा हिमगिरावाराध्य गौरीपतिम् ।
लब्ध्वा तत्परशुं तदुक्तदनुजच्छेदी महास्त्रादिकं
प्राप्तो मित्रमथाकृतवृणमुनिं प्राप्यागमः स्वाश्रमम् ॥ ३६-४॥

आखेटेपगतोऽर्जुनः सुरगवीसम्प्राप्तसम्पद्गणै-
स्त्वत्पित्रा परिपूजितः पुरगतो दुर्मन्त्रिवाचा पुनः ।
गां क्रेतुं सचिवं न्ययुङ्क्त कुधिया तेनापि रुन्धन्मुनि-
प्राणक्षेपसरोषगोहतचमूचक्रेण वत्सो हृतः ॥ ३६-५॥

शुक्रोज्जीविततातवाक्यचलितक्रोधोऽथ सख्या समं
बिभ्रुद्ध्यातमहोदरोपनिहितं चापं कुठारं शरान् ।
आरूढः सहवाहयन्तृकरथं माहिष्मतीमाविशन्
वाग्भिर्वत्समदाशुषि क्षितिपतौ सम्प्रास्तुथाः सङ्गरम् ॥ ३६-६॥

पुत्राणामयुतेन सप्तदशभिश्चाक्षौहिणीभिर्महा-१९
सेनानीभिरनेकमित्रनिवहैर्व्याजृम्भितायोधनः ।
सद्यस्त्वत्ककुठारबाणविदलन्निश्शेषसैन्योत्करो
भीतिप्रद्रुतनष्टशिष्टनयस्त्वामापतद्धेहयः ॥ ३६-७॥

लीलावारितनर्मदाजलवलल्लङ्केशगर्वापह-
श्रीमद्बाहुसहस्रमुक्तबहुशस्त्रास्त्रं निरुन्धन्नमुम् ।
चक्रे त्वय्यथ वैष्णवेऽपि विफले बुद्ध्वा हरिं त्वां मुदा
ध्यायन्तं छितसर्वदोषमवधीः सोऽगात्परं ते पदम् ॥ ३६-८॥

भूयोऽमर्षितहेहयात्मजगणैस्ताते हते रेणुका-
माघ्नानां हृदयं निरीक्ष्य बहुशो घोरां प्रतिज्ञां वहन् ।
ध्यानानीतरथायुधस्त्वमकृथा विप्रद्रुहः क्षत्रियान्
दिक्चक्रेषु कुठारयन्विशिखयन् निःक्षात्रियां मेदिनीम् ॥ ३६-९॥

तातोज्जीवनकृन्नृपालककुलं त्रिःसप्तकृत्वो जयन्
सन्तर्प्याथ समन्तपञ्चकमहारक्तहृदौघे पितॄन् ।
यज्ञे क्ष्मामपि काश्यपादिषु दिशन् साल्वेन युध्यन् पुनः

कृष्णोऽमुं निहनिष्यतीति शमितो युद्धात् कुमारैर्भवान् ॥ ३६-१०॥    वर् - कुठारैर्भवान्

न्यस्यास्त्राणि महेन्द्रभूभृति तपस्तन्वन्पुनर्मज्जितां
गोकर्णावधि सागरेण धरणीं दृष्ट्वार्थितस्तापसैः ।
ध्यातेष्वासधृतानलास्त्रचकितं सिन्धुं स्रुवक्षेपणा-
दुत्सार्योद्धृतकेरलो भृगुपते वातेश संरक्ष माम् ॥ ३६-११॥

इति षट्त्रिंशदशकं समाप्तम् ।

इति नवमस्कन्धं समाप्तम् ।

दशमस्कन्धम् ।

सप्तत्रिंशदशकम् (३७)

श्रीकृष्णावतारोपक्रमम् ।

37 - Prelude To the Incarnation As Krishna

सान्द्रानन्दतनो हरे ननु पुरा दैवासुरे सङ्गरे
त्वत्कृत्ता अपि कर्मशेषवशतो ये ते न याता गतिम् ।
तेषां भूतलजन्मनां दितिभुवां भारेण दुरार्दिता
भूमिः प्राप विरिञ्चमाश्रितपदं देवैः पुरैवागतैः ॥ ३७-१॥

हा हा दुर्जनभूरिभारमथितां पाथोनिधौ पादुका-

मेतां पालय हन्त मे विवशतां सम्पृच्छ देवानिमान् ।
इत्यादिप्रचुरप्रलापविवशामालोक्य धाता महीं
देवानां वदनानि वीक्ष्य परितो दध्यौ भवन्तं हरे ॥ ३७-२॥

ऊचे चाम्बुजभूरमूनयि सुराः सत्यं धरित्र्या वचो
नन्वस्या भवतां च रक्षणविधौ दक्षो हि लक्ष्मीपतिः ।
सर्वे शर्वपुरस्सरा वयमितो गत्वा पयोवारिधिं
नत्वा तं स्तुमहे जवादिति युयः साकं तवाकेतनम् ॥ ३७-३॥

ते मुग्धानिलशालिदुग्धजलधेस्तीरं गताः सङ्गता
यावत्त्वत्पदचिन्तनैकमनसस्तावत्स पाथोजभूः ।
त्वद्वाचं हृदये निशम्य सकलानानन्दयन्नूचिवा-
नाख्यातः परमात्मना स्वयमहं वाक्यं तदाकर्ण्यताम् ॥ ३७-४॥

जाने दीनदशामहं दिविषदां भूमेश्च भीमैर्नृपै-
स्तत्क्षेपाय भवामि यादवकुले सोऽहं समग्रात्मना ।
देवा वृष्णिकुले भवन्तु कलया देवाङ्गनाश्चावनौ
मत्सेवार्थमिति त्वदीयवचनं पाथोजभूरूचिवान् ॥ ३७-५॥

श्रुत्वा कर्णरसायनं तव वचः सर्वेषु निर्वापित-
स्वान्तेष्वीश गतेषु तावककृपापीयूषतृप्तात्मसु ।
विख्याते मथुरापुरे किल भवत्सान्निध्यपुण्योत्तरे
धन्यां देवकनन्दनामुदवहद्राजा स शूरात्मजः ॥ ३७-६॥

उद्वाहावसितौ तदीयसहजः कंसोऽथ सम्मानय-
न्नेतौ सूततया गतः पथि रथे व्योमोत्थया त्वद्गिरा ।
अस्यास्त्वामतिदुष्टमष्टमसुतो हन्तेति हन्तेरितः
सन्त्रासात्स तु हन्तुमन्तिकगतां तन्वीं कृपाणीमधात् ॥ ३७-७॥

गृह्णानश्चिकुरेषु तां खलमतिः शौरेश्चिरं सान्त्वनै-
र्नो मुञ्चन्पुनरात्मजार्पणगिरा प्रीतोऽथ यातो गृहान् ।
आद्यं त्वत्सहजं तथार्पितमपि स्नेहेन नाहन्नसौ
दुष्टानामपि देव पुष्टकरुणा दृष्टा हि धीरेकदा ॥ ३७-८॥

तावत्त्वन्मनसैव नारदमुनिः प्रोचे स भोजेश्वरं
यूयं नन्वसुराः सुराश्च यदवो जानासि किं न प्रभो ।
मायावी स हरिर्भवद्वधकृते भावी सुरप्रार्थना-
दित्याकर्ण्य यदूनदूधुनदसौ शौरेश्च सूनूनहन् ॥ ३७-९॥

प्राप्ते सप्तमगर्भतामहिपतौ त्वत्प्रेरणान्मायया
नीते माधव रोहिणीं त्वमपि भोः सच्चित्सुखैकात्मकः ।
देवक्या जठरं विवेशिथ विभो संस्तूयमानस्सुरैः
स त्वं कृष्ण विधूय रोगपटलीं भक्तिं परां देहि मे ॥ ३७-१०॥

इति सप्तत्रिंशदशकं समाप्तम् ।

अष्टात्रिंशदशक (३८)

श्रीकृष्णावतारम् ।

38 - Incarnation of Sri Krishna

आनन्दरूप भगवन्नयि तेऽवतारे
प्राप्ते प्रदीप्तभवदङ्गनिरीयमाणैः ।
कान्तिव्रजैरिव घनाघनमण्डलैर्द्या-
मावृण्वती विरुरुचे किल वर्षवेला ॥ ३८-१॥

आशासु शीतलतरासु पयोदतोयै-
राशासिताप्तिविवशेषु च सज्जनेषु ।
नैशाकरोदयविधौ निशि मध्यमायां
क्लेशापहस्त्रिजगतां त्वमिहाऽविरासीः ॥ ३८-२॥

बाल्यस्पृशापि वपुषा दधुषा विभूती-
रुद्यत्किरीटकटकाङ्गदहारभासा ।
शङ्खारिवारिजगदापरिभासितेन
मेघासितेन परिलेसिथ सूतिगेहे ॥ ३८-३॥

वक्षःस्थलीसुखनिलीनविलासिलक्ष्मी-
मन्दाक्षलक्षितकटाक्षविमोक्षभेदैः ।
तन्मन्दिरस्य खलकंसकृतामलक्ष्मी-

मुन्मार्जयन्निव विरेजिथ वासुदेव ॥ ३८-४॥

शौरिस्तु धीरमुनिमण्डलचेतसोऽपि

दूरस्थितं वपुरुदीक्ष्य निजेक्षणाभ्याम् ।

आनन्दबाष्पपुलकोद्गमगद्गदार्द्र-

स्तुष्टाव दृष्टिमकरन्दरसं भवन्तम् ॥ ३८-५॥

देव प्रसीद परपूरुष तापवल्ली-

निर्लूनदात्र समनेत्र कलाविलासिन् ।

खेदानपाकुरु कृपागुरुभिः कटाक्षै-

रित्यादि तेन मुदितेन चिरं नुतोऽभूः ॥ ३८-६॥

मात्रा च नेत्रसलिलास्तृतगात्रवल्ल्या

स्तोत्रैरभिष्टुतगुणः करुणालयस्त्वम् ।

प्राचीनजन्मयुगलं प्रतिबोध्य ताभ्यां

मातुर्गिरा दधिथ मानुषबालवेषम् ॥ ३८-७॥

त्वत्प्रेरितस्तदनु नन्दतनूजया ते

व्यत्यासमारचयितुं स हि शूरसूनुः ।

त्वां हस्तयोरधृत चित्ताविधार्यमार्यै-

रम्भोरुहस्थकलहंसकिशोररम्यम् ॥ ३८-८॥

जाता तदा पशुपसद्मनि योगनिद्रा२०

निद्राविमुद्रितमथाकृत पौरलोकम् ।

त्वत्प्रेरणात्किमिह चित्रमचेतनैर्यद्-

द्वारैः स्वयं व्यघटि सङ्घटितैस्सुगाढम् ॥ ३८-९॥

शेषेण भूरिफणवारितवारिणाऽथ

स्वैरं प्रदर्शितपथो मणिदीपितेन ।

त्वां धारयन् स खलु धन्यतमः प्रतस्थे

सोऽयं त्वमीश मम नाशय रोगवेगान् ॥ ३८-१०॥

इति अष्टात्रिंशदशकं समाप्तम् ।

एकोनचत्वारिंशदशकम् (३९)

योगमाया प्रादुर्भावं तथा गोकुले कृष्णजन्मोत्सवम् ॥

## 39 - Manifestation of Yogamaya and Celebration of Birth of Shrikrishna at Gokula

भवन्तमयमुद्वहन् यदुकुलोद्वहो निस्सरन्

ददर्श गगनोच्चलज्जलभरां कलिन्दात्मजाम् ।

अहो सलिलसञ्चयः स पुनरैन्द्रजालोदितो

जलौघ इव तत्क्षणात्प्रपदमेयतामाययौ ॥ ३९-१॥

प्रसुप्तपशुपालिकां निभृतमारुदद्बालिका-

मपावृतकवाटिकां पशुपवाटिकामाविशन् ।
भवन्तमयमर्पयन् प्रसवतल्पके तत्पदा-
द्वहन् कपटकन्यकां स्वपुरमागतो वेगतः ॥ ३९-२॥

ततस्त्वदनुजारवक्षपितनिद्रवेगद्रव-
द्भटोत्करनिवेदितप्रसववार्तयैवार्तिमान् ।
विमुक्तचिकुरोत्करस्त्वरितमापतन् भोजरा-
डतुष्ट इव दृष्टवान् भगिनिकाकरे कन्यकाम् ॥ ३९-३॥

ध्रुवं कपटशालिनो मधुहरस्य माया भवे-
दसाविति किशोरिकां भगिनिकाकरालिङ्गिताम् ।
द्विपो नलिनिकान्तरादिव मृणालिकामाक्षिप-
न्नयं त्वदनुजामजामुपलपट्टके पिष्टवान् ॥ ३९-४॥

ततो भवदुपासको झटिति मृत्युपाशादिव
प्रमुच्य तरसैव सा समधिरूढरूपान्तरा ।
अधस्तलमजग्मुषी विकसदष्टबाहुस्फुरन्-
महायुधमहो गता किल विहायसा दिद्युते ॥ ३९-५॥

नृशंसतर कंस ते किमु मया विनिष्पिष्टया
बभूव भवदन्तकः क्वचन चिन्त्यतां ते हितम् ।
इति त्वदनुजा विभो खलमुदीर्य तं जग्मुषी
मरुद्गणपणायिता भुवि च मन्दिराण्येयुषी ॥ ३९-६॥

प्रगे पुनरगात्मजावचनमीरिता भूभुजा
प्रलम्बबकपूतनाप्रमुखदानवा मानिनः ।
भवन्निधनकाम्यया जगति बभ्रमुर्निर्भयाः
कुमारकविमारकाः किमिव दुष्करं निष्कृपैः ॥ ३९-७॥

ततः पशुपमन्दिरे त्वयि मुकुन्द नन्दप्रिया-
प्रसूतिशयनेशये रुदति किञ्चिदञ्चत्पदे ।
विबुध्य वनिताजनैस्तनयसम्भवे घोषिते
मुदा किमु वदाम्यहो सकलमाकुलं गोकुलम् ॥ ३९-८॥

अहो खलु यशोदया नवकलायचेतोहरं
भवन्तमलमन्तिके प्रथममपिबन्त्या दृशा ।
पुनः स्तनभरं निजं सपदि पाययन्त्या मुदा
मनोहरतनुस्पृशा जगति पुण्यवन्तो जिताः ॥ ३९-९॥

भवत्कुशलकाम्यया स खलु नन्दगोपस्तदा
प्रमोदभरसङ्कुले द्विजकुलाय किं नाददात् ।
तथैव पशुपालकाः किमु न मङ्गलं तेनिरे
जगत्रितयमङ्गल त्वमिह पाहि मामामयात् ॥ ३९-१०॥

इति एकोनचत्वारिंशदशकं समाप्तम् ।

## चत्वारिंशदशकम् (४०)

## पूतनामोक्षम् ।

## 40 - Salvation of Putana

तदनु नन्दममन्दशुभास्पदं नृपपुरीं करदानकृते गतम् ।
समवलोक्य जगाद भवत्पिता विदितकंससहायजनोद्यमः ॥ ४०-१॥

अयि सखे तव बालकजन्म मां सुखयतेऽद्य निजात्मजजन्मवत् ।
इति भवत्पितृतां व्रजनायके समधिरोप्य शशंस तमादरात् ॥ ४०-२॥

इह च सन्त्यनिमित्तशतानि ते कटकसीम्नि ततो लघु गम्यताम् ।
इति च तद्वचसा व्रजनायको भवदपायभिया द्रुतमाययौ ॥ ४०-३॥

अवसरे खलु तत्र च काचन व्रजपदे मधुराकृतिरङ्गना ।
तरलषट्पदलालितकुन्तला कपटपोतक ते निकटं गता ॥ ४०-४॥

सपदि सा हृतबालकचेतना निशिचरान्वयजा किल पूतना ।
व्रजवधूष्विह केयमिति क्षणं विमृशतीषु भवन्तमुपाददे ॥ ४०-५॥

ललितभावविलासहृतात्मभिर्युवतिभिः प्रतिरोद्धुमपारिता ।
स्तनमसौ भवनान्तनिषेदुषी प्रददुषी भवते कपटात्मने ॥ ४०-६॥

समधिरुह्य तदङ्कमशङ्कितस्त्वमथ बालकलोपनरोषितः ।
महदिवाम्रफलं कुचमण्डलं प्रतिचुचूषिथ दुर्विषदूषितम् ॥ ४०-७॥

असुभिरेव समं धयति त्वयि स्तनमसौ स्तनितोपमनिस्वना ।
निरपतद्भयदायि निजं वपुः प्रतिगता प्रविसार्य भुजावुभौ ॥ ४०-८॥

भयदघोषणभीषणविग्रहश्रवणदर्शनमोहितवल्लवे ।
व्रजपदे तदुरःस्थलखेलनं ननु भवन्तमगृह्णत गोपिकाः ॥ ४०-९॥

भुवनमङ्गलनामभिरेव ते युवतिभिर्बहुधा कृतरक्षणः ।
त्वमयि वातनिकेतननाथ मामगदयं कुरु तावकसेवकम् ॥ ४०-१०॥

इति चत्वारिंशदशकं समाप्तम् ।

## एकचत्वारिंशदशकम् (४१)

### पूतनादहनं तथा कृष्णलाळनाह्लादम् ।

### 41 - Cremation of Putana and Joy of Caressing Krishna

व्रजेश्वरः शौरिवचो निशम्य समाव्रजन्नध्वनि भीतचेताः ।
निष्पिष्टनिश्शेषतरुं निरीक्ष्य कञ्चित्पदार्थं शरणं गतस्त्वाम् ॥ ४१-१॥

निशम्य गोपीवचनादुदन्तं सर्वेऽपि गोपा भयविस्मयान्धाः ।

त्वत्पातितं घोरपिशाचदेहं देहुर्विदूरेऽथ कुठारकृत्तम् ॥ ४१-२॥

त्वत्पीतपूतस्तनतच्छरीरात्समुच्चलन्नुच्चतरो हि धूमः ।
शङ्कामधादागरवः किमेष किं चान्दनो गौल्गुलवोऽथवेति ॥ ४१-३॥

मदङ्गसङ्गस्य फलं न दूरे क्षणेन तावद्भवतामपि स्यात् ।
इत्युल्लपन्वल्लवतल्लजेभ्यस्त्वं पूतनामातनुथास्सुगन्धिम् ॥ ४१-४॥

चित्रं पिशाच्या न हतः कुमारश्चित्रं पुरैवाकथि शौरिणेदम् ।
इति प्रशंसन्किल गोपलोको भवन्मुखालोकरसे न्यमाङ्क्षीत् ॥ ४१-५॥

दिने दिनेऽथ प्रतिवृद्धलक्ष्मीरक्षीणमङ्गल्यशतो व्रजोऽयम् ।
भवन्निवासादयि वासुदेव प्रमोदसान्द्रः परितो विरेजे ॥ ४१-६॥

गृहेषु ते कोमलरूपहासमिथः कथासङ्कुलिताः कमन्यः ।
वृत्तेषु कृत्येषु भवन्निरीक्षासमागताः प्रत्यहमत्यनन्दन् ॥ ४१-७॥

अहो कुमारो मयि दत्तदृष्टिः स्मितं कृतं मां प्रति वत्सकेन ।
एह्येहि मामित्युपसार्य पाणिं त्वयीश किं किं न कृतं वधूभिः ॥ ४१-८॥

भवद्वपुःस्पर्शनकौतुकेन करात्करं गोपवधूजनेन ।
नीतस्त्वमाताम्रसरोजमालाव्यालम्बिलोलम्बतुलामलासीः ॥ ४१-९॥

निपाययन्ती स्तनमङ्कगं त्वां विलोकयन्ती वदनं हसन्ती ।
दशां यशोदा कतमान्न भेजे स तादृशः पाहि हरे गदान्माम् ॥ ४१-१०॥

इति एकचत्वारिंशदशकं समाप्तम् ॥

## द्विचत्वारिंशदशकम् (४२)

### शकटासुरवधम् ।

### 42 - Slaying of Shakatasura

कदापि जन्मर्क्षदिने तव प्रभो निमन्त्रितज्ञातिवधूमहीसुरा ।
महानसस्त्वां सविधे निधाय सा महानसादौ ववृते व्रजेश्वरी ॥ ४२-१॥

ततो भवत्त्राणनियुक्तबालकप्रभीतिसङ्क्रन्दनसङ्कुलारवैः ।
विमिश्रमश्रावि भवत्समीपतः परिस्फुटद्दारुचटच्चटारवः ॥ ४२-२॥

ततस्तदाकर्णनसम्भ्रमश्रमप्रकम्पिवक्षोजभरा व्रजाङ्गनाः ।
भवन्तमन्तर्ददृशुः समन्ततो विनिष्पतद्दारुणदारुमध्यगम् ॥ ४२-३॥

शिशोरहो किं किमभूदिति द्रुतं प्रधाव्य नन्दः पशुपाश्च भूसुराः ।
भवन्तमालोक्य यशोदया धृतं समाश्वसन्नश्रुजलार्द्रलोचनाः ॥ ४२-४॥

कस्को नु कौतस्कुत एष विस्मयो विशङ्कटं यच्छकटं विपाटितम् ।

न कारणं किञ्चिदिहेति ते स्थिताः स्वनासिकादत्तकरास्त्वदीक्षकाः ॥ ४२-५॥

कुमारकस्यास्य पयोधरार्थिनः प्ररोदने लोलपदाम्बुजाहतम् ।
मया मया दृष्टमनो विपर्यगादितीश ते पालकबालका जगुः ॥ ४२-६॥

भिया तदा किञ्चिदजानतामिदं कुमारकाणामतिदुर्घटं वचः ।
भवत्प्रभावाविदुरैरितीरितं मनागिवाशङ्क्यत दृष्टपूतनैः ॥ ४२-७॥

प्रवालताम्रं किमिदं पदं क्षतं सरोजरम्यौ नु करौ विरोजितौ ।
इति प्रसर्पत्करुणातरङ्गितास्त्वदङ्गमापस्पृशुरङ्गनाजनाः ॥ ४२-८॥

अये सुतं देहि जगत्पतेः कृपातरङ्गपातात्परिपातमद्य मे ।
इति स्म सङ्गृह्य पिता त्वदङ्गकं मुहुर्मुहुः श्लिष्यति जातकण्टकः ॥ ४२-९॥

अनोनिलीनः किल हन्तुमागतः सुरारिरेवं भवता विहिंसितः ।
रजोऽपि नो दृष्टममुष्य तत्कथं स शुद्धसत्त्वे त्वयि लीनवान्ध्रुवम् ॥ ४२-१०॥

प्रपूजितैस्तत्र ततो द्विजातिभिर्विशेषतो लम्भितमङ्गलाशिषः ।
व्रजं निजैर्बाल्यरसैर्विमोहयन्मरुत्पुराधीश रुजां जहीहि मे ॥ ४२-११॥

इति द्विचत्वारिंशदशकं समाप्तम् ।

## त्रिचत्वारिंशदशकम् (४३)

## तृणावर्तवधम् ।

## 43 - The Slaying of Trinavarta

त्वामेकदा गुरुमरुत्पुरनाथ वोढुं
गाढाधिरूढगरिमाणमपारयन्ती ।
माता निधाय शयने किमिदं बतेति
ध्यायन्त्यचेष्टत गृहेषु निविष्टशङ्का ॥ ४३-१॥

तावद्विदूरमुपकर्णितघोरघोष-
व्याजृम्भिपांसुपटलीपरिपूरिताशः ।
वात्यावपुः स किल दैत्यवरस्तृणाव-
र्ताख्यो जहार जनमानसहारिणं त्वाम् ॥ ४३-२॥

उद्दामपांसुतिमिराहतदृष्टिपाते
द्रष्टुं किमप्यकुशले पशुपाललोके ।
हा बालकस्य किमिति त्वदुपान्तमाप्ता२१
माता भवन्तमविलोक्य भृशं रुरोद ॥ ४३-३॥

तावत्स दानववरोऽपि च दीनमूर्ति-
र्भावत्कभारपरिधारणलूनवेगः ।
सङ्कोचमाप तदनु क्षतपांसुघोषे
घोषे व्यतायत भवज्जननीनिनादः ॥ ४३-४॥

रोदोपकर्णनवशादुपगम्य गेहं
क्रन्दत्सु नन्दमुखगोपकुलेषु दीनः ।
त्वां दानवस्त्वखिलमुक्तिकरं मुमुक्षु-
स्त्वय्यप्रमुञ्चति पपात वियत्प्रदेशात् ॥ ४३-५॥

रोदाकुलास्तदनु गोपगणा बहिष्ठ-
पाषाणपृष्ठभुवि देहमतिस्थविष्ठम् ।
प्रैक्षन्त हन्त निपन्तममुष्य वक्ष-
स्यक्षीणमेव च भवन्तमलं हसन्तम् ॥ ४३-६॥

ग्रावप्रपातपरिपिष्टगरिष्ठदेह-
भ्रष्टासुदुष्टदनुजोपरि धृष्टहासम् ।
आघ्नानमम्बुजकरेण भवन्तमेत्य
गोपा दधुर्गिरिवरादिव नीलरत्नम् ॥ ४३-७॥

एकैकमाशु परिगृह्य निकामनन्द-
न्नन्दादिगोपपरिरब्धविचुम्बिताङ्गम् ।
आदातुकामपरिशङ्कितगोपनारी-
हस्ताम्बुजप्रपतितं प्रणुमो भवन्तम् ॥ ४३-८॥

भूयोऽपि किन्नु कृणुमः प्रणतार्तिहारी
गोविन्द एव परिपालयतात्सुतं नः ।

इत्यादि मातरपितृप्रमुखैस्तदानीं

सम्प्रार्थितस्त्वदवनाय विभो त्वमेव ॥ ४३-९॥

वातात्मकं दनुजमेवमयि प्रधून्वन्

वातोद्भवान्मम गदान्किमु नो धुनोषि ।

किं वा करोमि पुरनप्यनिलालयेश

निश्शेषरोगशमनं मुहुरर्थये त्वाम् ॥ ४३-१०॥

इति त्रिचत्वारिंशदशकं समाप्तम् ।

## चतुश्चत्वारिंशदशकम् (४४)

### नामकरणसंस्कारादि ।

### 44 - Naming Ceremony Etc

गूढं वसुदेवगिरा कर्तुं ते निष्क्रियस्य संस्कारान् ।

हृद्गतहोरातत्वो गर्गमुनिस्त्वद्गृहं विभो गतवान् ॥ ४४-१॥

नन्दोऽथ नन्दितात्मा वृन्दिष्टं मानयन्नमुं यमिनाम् ।

मन्दस्मितार्द्रमूचे त्वत्संस्कारान् विधातुमुत्सुकधीः ॥ ४४-२॥

यदुवंशाचार्यत्वात्सुनिभृतमिदमार्य कार्यमिति कथयन् ।

गर्गो निर्गतपुलकश्चक्रे तव साग्रजस्य नामानि ॥ ४४-३॥

कथमस्य नाम कुर्वे सहस्रनाम्नो ह्यनन्तनाम्नो वा ।
इति नूनं गर्गमुनिश्चक्रे तव नाम नाम रहसि विभो ॥ ४४-४॥

कृषिधातुणकाराभ्यां सत्तानन्दात्मतां किलाभिलपत् ।
जगदघकर्षित्वं वा कथयदृषिः कृष्णनाम ते व्यतनोत् ॥ ४४-५॥

अन्यांश्च नामभेदान् व्याकुर्वन्नग्रजे च रामादीन् ।
अतिमानुषानुभावं न्यगदत्त्वामप्रकाशयन्पित्रे ॥ ४४-६॥

स्निह्यति यस्तव पुत्रे मुह्यति स न मायिकैः पुनश्शोकैः ।
द्रुह्यति यस्स तु नश्येदित्यवदत्ते महत्त्वमृषिवर्यः ॥ ४४-७॥

जेष्यति बहुतरदैत्यान् नेष्यति निजबन्धुलोकममलपदम् ।
श्रोष्यति सुविमलकीर्तीरस्येति भवद्विभूतिमृषिरूचे ॥ ४४-८॥

अमुनैव सर्वदुर्गं तरितास्थ कृतास्थमत्र तिष्ठध्वम् ।
हरिरेवेत्यनभिलपन्नित्यादि त्वामवर्णयत्स मुनिः ॥ ४४-९॥

गर्गेऽथ निर्गतेऽस्मिन् नन्दितनन्दादिनन्द्यमानस्त्वम् ।
मद्गदमुद्गतकरुणो निर्गमय श्रीमरुत्पुराधीश ॥ ४४-१०॥

इति चतुश्चत्वारिंशदशकं समाप्तम् ।

## पञ्चचत्वारिंशदशकम् (४५)

### श्रीकृष्णस्य बाललीलाः ।

### 45 - Krishna's Childhood Pranks

अयि सबल मुरारे पाणिजानुप्रचारैः
किमपि भवनभागान् भूषयन्तौ भवन्तौ ।
चलितचरणकञ्जौ मञ्जुमञ्जीरशिञ्जा-
श्रवणकुतुकभाजौ चेरतुश्चारु वेगात् ॥ ४५-१॥

मृदु मृदु विहसन्तावुन्मिषद्दन्तवन्तौ
वदनपतितकेशौ दृश्यपादाब्जदेशौ ।
भुजगलितकरान्तव्यालगत्कङ्कणाङ्कौ
मतिमहरतमुच्चैः पश्यतां विश्वनॄणाम् ॥ ४५-२॥

अनुसरति जनौघे कौतुकव्याकुलाक्षे
किमपि कृतनिनादं व्याहसन्तौ द्रवन्तौ ।
वलितवदनपद्मं पृष्ठतो दत्तदृष्टी२२
किमिव न विदधाथे कौतुकं वासुदेव ॥ ४५-३॥

द्रुतगतिषु पतन्तावुत्थितौ लिप्तपङ्कौ
दिवि मुनिभिरपङ्कैः सस्मितं वन्द्यमानौ ।

द्रुतमथ जननीभ्यां सानुकम्पं गृहीतौ

मुहुरपि परिरब्धौ द्राग्युवां चुम्बितौ च ॥ ४५-४॥

स्नुतकुचभरमङ्के धारयन्ती भवन्तं

तरलमति यशोदा स्तन्यदा धन्यधन्या ।

कपटपशुप मध्ये मुग्धहासाङ्कुरं ते

दशनमुकुलहृद्यं वीक्ष्य वक्त्रं जहर्ष ॥ ४५-५॥

तदनु चरणचारी दारकैः साकमारा-

न्निलयततिषु खेलन् बालचापल्यशाली ।

भवनशुकबिडालान् वत्सकांश्चानुधावन्

कथमपि कृतहासैर्गोपकैर्वारितोऽभूः ॥ ४५-६॥

हलधरसहितस्त्वं यत्र यत्रोपयातो

विवशपतितनेत्रास्तत्र तत्रैव गोप्यः ।

विगलितगृहकृत्या विस्मृतापत्यभृत्या

मुरहर मुहुरत्यन्ताकुला नित्यमासन् ॥ ४५-७॥

प्रतिनवनवनीतं गोपिकादत्तमिच्छन्

कलपदमुपगायन् कोमलं क्वापि नृत्यन् ।

सदययुवतिलोकैरर्पितं सर्पिरश्नन्

क्वचन नवविपक्वं दुग्धमप्यापिबस्त्वम् ॥ ४५-८॥

मम खलु बलिगेहे याचनं जातमास्ता-

मिह पुनरबलानामग्रतो नैव कुर्वे ।

इति विहितमतिः किं देव सन्त्यज्य याच्ञां

दधिघृतमहरस्त्वं चारुणा चोरणेन ॥ ४५-९॥

तव दधिघृतमोषे घोषयोषाजनाना-

मभजत हृदि रोषो नावकाशं न शोकः ।

हृदयमपि मुषित्वा हर्षसिन्धौ न्यधास्त्वं

स मम शमय रोगान्वातगेहाधिनाथ ॥ ४५-१०॥

इति पञ्चचत्वारिंशदशकं समाप्तम् ।

## षट्चत्वारिंशदशकम् (४६)

## विश्वरूपदर्शनम् ।

## 46 - Revelation of the Cosmic Form

अयि देव पुरा किल त्वयि स्वयमुत्तानशये स्तनन्धये ।

परिजृम्भणतो व्यपावृते वदने विश्वमचष्ट वल्लवी ॥ ४६-१॥

पुनरप्यथ बालकैः समं त्वयि लीलानिरते जगत्पते ।

फलसञ्चयवञ्चनकृधा तव मृद्भोजनमूचुरर्भकाः ॥ ४६-२॥

अयि ते प्रलयावधौ विभो क्षितितोयादिसमस्तभक्षिणः ।
मृदुपाशनतो रुजा भवेदिति भीता जननी चुकोप सा ॥ ४६-३॥

अयि दुर्विनयात्मक त्वया किमु मृत्सा बत वत्स भक्षिता ।
इति मातृगिरं चिरं विभो वितथां त्वं प्रतिजज्ञिषे हसन् ॥ ४६-४॥

अयि ते सकलैर्विनिश्चिते विमतिश्चेद्वदनं विदार्यताम् ।
इति मातृविभर्त्सितो मुखं विकसत्पद्मनिभं व्यदारयः ॥ ४६-५॥

अपि मृल्लवदर्शनोत्सुकां जननीं तां बहु तर्पयन्निव ।
पृथिवीं निखिलां न केवलं भुवनान्यप्यखिलान्यदीदृशः ॥ ४६-६॥

कुहचिद्वनमम्बुधिः क्वचित् क्वचिदभ्रं कुहचिद्रसातलम् ।
मनुजा दनुजाः क्वचित्सुरा ददृशे किं न तदा त्वदानने ॥ ४६-७॥

कलशाम्बुधिशायिनं पुनः परवैकुण्ठपदाधिवासिनम् ।
स्वपुरश्च निजार्भकात्मकं कतिधा त्वां न ददर्श सा मुखे ॥ ४६-८॥

विकसद्भुवने मुखोदरे ननु भूयोऽपि तथाविधाननः ।
अनया स्फुटमीक्षितो भवाननवस्थां जगतां बतातनोत् ॥ ४६-९॥

धृततत्त्वधियं तदा क्षणं जननीं तां प्रणयेन मोहयन् ।
स्तनमम्ब दिशेत्युपासजन् भगवन्नद्भुतबाल पाहि माम् ॥ ४६-१०॥

इति षट्चत्वारिंशदशकं समाप्तम् ।

## सप्तचत्वारिंशदशकम् (४७)

## उलूखलबन्धनम् ।

## 47 - Tying Krishna To the Mortar

एकदा दधिविमाथकारिणीं मातरं समुपसेदिवान् भवान् ।
स्तन्यलोलुपतया निवारयन्नङ्कमेत्य पपिवान्पयोधरौ ॥ ४७-१॥

अर्धपीतकुचकुड्मले त्वयि स्निग्धहासमधुराननाम्बुजे ।
दुग्धमीश दहने परिस्रुतं धर्तुमाशु जननी जगाम ते ॥ ४७-२॥

सामिपीतरसभङ्गसङ्गतक्रोधभारपरिभूतचेतसा ।
मन्थदण्डमुपगृह्य पाटितं हन्त देव दधिभाजनं त्वया ॥ ४७-३॥

उच्चलद्ध्वनितमुच्चकैस्तदा सन्निशम्य जननी समादृता ।
त्वद्यशोविसरवद्ददर्श सा सद्य एव दधि विस्तृतं क्षितौ ॥ ४६-४॥

वेदमार्गपरिमार्गितं रुषा त्वामवीक्ष्य परिमार्गयन्त्यसौ ।
सन्ददर्श सुकृतिन्युलूखले दीयमाननवनीतमोतवे ॥ ४६-५॥

त्वां प्रगृह्य बत भीतिभावनाभासुराननसरोजमाशु सा ।

रोषरूषितमुखी सखीपुरो बन्धनाय रशनामुपाददे ॥ ४७-६॥

बन्धुमिच्छति यमेव सज्जनस्तं भवन्तमयि बन्धुमिच्छति ।
सा नियुज्य रशनागुणान्बहून् द्व्यङ्गुलोनमखिलं किलैक्षत ॥ ४७-७॥

विस्मितोत्स्मितसखीजनेक्षितां स्विन्नसन्नवपुषं निरीक्ष्य ताम् ।
नित्यमुक्तवपुरप्यहो हरे बन्धमेव कृपयान्वमन्यथाः ॥ ४७-८॥

स्थीयतां चिरमुलूखले खलेत्यागता भवनमेव सा यदा ।
प्रागुलूखलबिलान्तरे तदा सर्पिरर्पितमदन्नवास्थिताः ॥ ४७-९॥

यद्यपाशसुगमो भवान्विभो संयतः किमु सपाशयानया ।
एवमादि दिविजैरभिष्टुतो वातनाथ परिपाहि मां गदात् ॥ ४७-१०॥

इति सप्तचत्वारिंशदशकं समाप्तम् ।

## अष्टचत्वारिंशदशकम् (४८)

### नळकूबर-मणिग्रीवयोः शापमोक्षम् ।

### 48 - Redemption of Nalakubara And Manigriva

मुदा सुरौघैस्त्वमुदारसम्मदैरुदीर्य दामोदर इत्यभिष्टुतः ।
मृदूदरः स्वैरमुलूखले लगन्नदूरतो द्वौ ककुभावुदैक्षथाः ॥ ४८-१॥

कुबेरसूनुर्नलकूबराभिधः परो मणिग्रीव इति प्रथां गतः ।
महेशसेवाधिगतश्रियोन्मदौ चिरं किल त्वद्विमुखावखेलताम् ॥ ४८-२॥

सुरापगायां किल तौ मदोत्कटौ सुरापगायद्बहुयौवतावृतौ ।
विवाससौ केलिपरौ स नारदो भवत्पदैकप्रवणो निरैक्षत ॥ ४८-३॥

भिया प्रियालोकमुपात्तवाससं पुरो निरीक्ष्यापि मदान्धचेतसौ ।
इमौ भवद्भक्त्युपशान्तिसिद्धये मुनिर्जगौ शान्तिमृते कुतस्सुखम् ॥ ४८-४॥

युवामवाप्तौ ककुभात्मतां चिरं हरिं निरीक्ष्याथ पदं स्वमाप्नुतम् ।
इतीरितौ तौ भवदीक्षणस्पृहां गतौ व्रजान्ते ककुभौ बभूवतुः ॥ ४८-५॥

अतन्द्रमिन्द्रद्रुयुगं तथाविधं समेयुषा मन्थरगामिना त्वया ।
तिरायितोलूखलरोधनिर्धुतौ चिराय जीर्णौ परिपातितौ तरू ॥ ४८-६॥

अभाजि शाखिद्वितयं यदा त्वया तदैव तद्गर्भतलान्निरेयुषा ।
महात्विषा यक्षयुगेन तत्क्षणादभाजि गोविन्द भवानपि स्तवैः ॥ ४८-७॥

इहान्यभक्तोऽपि समेष्यति क्रमाद्भवन्तमेतौ खलु रुद्रसेवकौ ।
मुनिप्रसादाद्भवदङ्घ्रिमागतौ गतौ वृणानौ खलु भक्तिमुत्तमाम् ॥ ४८-८॥

ततस्तरूद्दारणदारुणारवप्रकम्पिसम्पातिनि गोपमण्डले ।

विलज्जितत्वज्जननीमुखेक्षिणा व्यमोक्षि नन्दने भवान्विमोक्षदः ॥ ४८-९॥

महीरुहोर्मध्यगतो बतार्भको हरेः प्रभावादपरिक्षतोऽधुना ।
इति ब्रुवाणैर्गमितो गृहं भवान्मरुत्पुराधीश्वर पाहि मां गदात् ॥ ४८-१०॥

इति अष्टचत्वारिंशदशकं समाप्तम् ।

## एकोनपञ्चाशत्तमदशकम् (४९)

## वृन्दावनप्रवेशम् ।

## 49 - Journey To Vrindavana

भवत्प्रभावाविदुरा हि गोपास्तरुप्रपातादिकमत्र गोष्ठे ।
अहेतुमुत्पातगणं विशङ्क्य प्रयातुमन्यत्र मनो वितेनुः ॥ ४९-१॥

तत्रोपनन्दाभिधगोपवर्यो जगौ भवत्प्रेरणयैव नूनम् ।
इतः प्रतीच्यां विपिनं मनोज्ञं वृन्दावनं नाम विराजतीति ॥ ४९-२॥

बृहद्वनं तत्खलु नन्दमुख्या विधाय गौष्ठीनमथ क्षणेन ।
त्वदन्वितत्वज्जननीनिविष्टगरिष्ठयानानुगता विचेलुः ॥ ४९-३॥

अनोमनोज्ञध्वनिधेनुपालीखुरप्रणादान्तरतो वधूभिः ।
भवद्विनोदालपिताक्षराणि प्रपीय नाज्ञायत मार्गदैर्घ्यम् ॥ ४९-४॥

निरीक्ष्य वृन्दावनमीश नन्दत्प्रसूनकुन्दप्रमुखद्रुमौघम् ।
अमोदथाश्शाद्वलसान्द्रलक्ष्म्या हरिन्मणीकुट्टिमपुष्टशोभम् ॥ ४९-५॥

नवाकनिर्व्युढनिवासभेदेष्वशेषगोपेषु सुखासितेषु ।
वनश्रियं गोपकिशोरपालीविमिश्रितः पर्यवलोकथास्त्वम् ॥ ४९-६॥

अरालमार्गागतनिर्मलापां मरालकुजाकृतनर्मलापाम् ।
निरन्तरस्मेरसरोजवक्त्रां कलिन्दकन्यां समलोकयस्त्वम् ॥ ४९-७॥

मयूरकेकाशतलोभनीयं मयूखमालशबलं मणीनाम् ।
विरिञ्चलोकस्पृशमुच्चशृङ्गैर्गिरिं च गोवर्धनमैक्षथास्त्वम् ॥ ४९-८॥

समं ततो गोपकुमारकैस्त्वं समन्ततो यत्र वनान्तमागाः ।
ततस्ततस्तां कुटिलामपश्यः कलिन्दजां रागवतीमिवैकाम् ॥ ४९-९॥

तथाविधेऽस्मिन्विपिने पशव्ये समुत्सुको वत्सगणप्रचारे ।
चरन्सरामोऽथ कुमारकैस्त्वं समीरगेहाधिप पाहि रोगात् ॥ ४९-१०॥

इति एकोनपञ्चाशत्तमदशकं समाप्तम् ।

## पञ्चाशत्तमदशकम् (५०)

## वत्सासुर-बकासुरयोः वधम् ।

## 50 - Slaying of VatsAsura And BakAsura

तरलमधुकृद्वृन्दे वृन्दावनेऽथ मनोहरे२३
पशुपशिशुभिस्साकं वत्सानुपालनलोलुपः ।
हलधरसखो देव श्रीमन् विचेरिथ धारयन्
गवलमुरलीवेत्रं नेत्राभिरामतनुद्युतिः ॥ ५०-१॥

विहितजगतीरक्षं लक्ष्मीकराम्बुजलालितं
ददति चरणद्वन्द्वं वृन्दावने त्वयि पावने ।२४
किमिव न बभौ सम्पत्सम्पूरितं तरुवल्लरी-
सलिलधरणीगोत्रक्षेत्रादिकं कमलापते ॥ ५०-२॥

विलसदुलपे कान्तारान्ते समीरणशीतले
विपुलयमुनातीरे गोवर्धनाचलमूर्धसु ।
ललितमुरलीनादस्सञ्चारयन्खलु वात्सकं
क्वचन दिवसे दैत्यं वत्साकृतिं त्वमुदैक्षथाः ॥ ५०-३॥

रभसविलसत्पुच्छं विच्छायतोऽस्य विलोकयन्
किमपि वलितस्कन्धं रन्ध्रप्रतीक्षमुदीक्षितम् ।
तमथ चरणे बिभ्रद्विभ्रामयन्मुहुरुच्चकैः
कुहचन महावृक्षे चिक्षेपिथ क्षतजीवितम् ॥ ५०-४॥

निपतति महादैत्ये जात्या दुरात्मनि तत्क्षणं

निपतनजवक्षुण्णक्षोणीरुहक्षतकानने ।

दिवि परमिलद्वृन्दा वृन्दारकाः कुसुमोत्करैः

शिरसि भवतो हर्षाद्वर्षन्ति नाम तदा हरे ॥ ५०-५॥

सुरभिलतमा मूर्धन्यूर्ध्वं कुतः कुसुमावली

निपतति तवेत्युक्तो बालैः सहेलमुदैरयः ।

झटिति दनुजक्षेपेणोर्ध्वं गतस्तरुमण्डलात्

कुसुमनिकरस्सोऽयं नूनं समेति शनैरिति ॥ ५०-६॥

क्वचन दिवसे भूयो भूयस्तरे परुषातपे

तपनतनयापाथः पातुं गता भवदादयः ।

चलितगरुतं प्रेक्षामासुर्बकं खलु विस्मृतं

क्षितिधरगरुच्छेदे कैलासशैलमिवापरम् ॥ ५०-७॥

पिबति सलिलं गोपव्राते भवन्तमभिद्रुतः

स किल निगिलन्नग्निप्रख्यं पुनर्द्रुतमुद्वमन् ।

दलयितुमगात्त्रोट्याः कोट्या तदा तु भवान्विभो२५

खलजनभिदा चुञ्चुश्चञ्चू प्रगृह्य ददार तम् ॥ ५०-८॥

सपदि सहजां सन्द्रष्टुं वा मृतां खलु पूतना-

मनुजमघमप्यग्रे गत्वा प्रतीक्षितुमेव वा ।

शमननिलयं याते तस्मिन्बके सुमनोगणे

किरति सुमनोवृन्दं वृन्दावनाद्गृहमैयथाः ॥ ५०-९॥

ललितमुरलीनादं दूरान्निशम्य वधूजनै-

स्त्वरितमुपगम्यारादारूढमोदमुदीक्षितः ।

जनितजननीनन्दानन्दस्समीरणमन्दिर-

प्रथितवसते शौरे दूरीकुरुष्व ममामयान् ॥ ५०-१०॥

इति पञ्चाशत्तमशकं समाप्तं

एकपञ्चाशत्तमशकम् (५१)

अघासुरवधम् ।

51 - Slaying of AghAsura

कदाचन व्रजशिशुभिः समं भवान् वनाशने विहितमतिः प्रगेतराम् ।

समावृतो बहुतरवत्समण्डलैः सतेमनैर्निरगमदीश जेमनैः ॥ ५१-१॥

विनिर्यतस्तव चरणाम्बुजद्वयादुदञ्चितं त्रिभुवनपावनं रजः ।

महर्षयः पुलकधरैः कलेबरैरुदूहिरे धृतभवदीक्षणोत्सवाः ॥ ५१-२॥

प्रचारयत्यविरलशाद्वले तले पशून्विभो भवति समं कुमारकैः ।

अघासुरो न्यरुणदघाय वर्तनीं भयानकः सपदि शयानकाकृतिः ॥ ५१-३॥

महाचलप्रतिमतनोर्गुहानिभप्रसारितप्रथितमुखस्य कानने ।
मुखोदरं विहरणकौतुकाद्गताः कुमारकाः किमपि विदूरगे त्वयि ॥ ५१-४॥

प्रमादतः प्रविशति पन्नगोदरं क्वथत्तनौ पशुपकुले सवात्सके ।
विदन्निदं त्वमपि विवेशिथ प्रभो सुहृज्जनं विशरणमाशु रक्षितुम् ॥ ५१-५॥

गलोदरे विपुलितवर्ष्मणा त्वया महोरगे लुठति निरुद्धमारुते ।
द्रुतं भवान्विदलितकण्ठमण्डलो विमोचयन्पशुपशून् विनिर्ययौ ॥ ५१-६॥

क्षणं दिवि त्वदुपगमार्थमास्थितं महासुरप्रभवमहो महो महत् ।
विनिर्गते त्वयि तु निलीनमञ्जसा नभःस्थले ननृतुरथो जगुस्सुराः ॥ ५१-७॥

सविस्मयैः कमलभवादिभिः सुरैरनुद्रुतस्तदनु गतः कुमारकैः ।
दिने पुनस्तरुणदशामुपेयुषि स्वकैर्भवानतनुत भोजनोत्सवम् ॥ ५१-८॥

विषाणिकामपि मुरलीं नितम्बके निवेशयन्कबलधरः कराम्बुजे ।
प्रहासयन्कलवचनैः कुमारकान् बुभोजिथ त्रिदशगणैर्मुदा नुतः ॥ ५१-९॥

सुखाशनं त्विह तव गोपमण्डले मखाशनात्प्रियमिव देवमण्डले ।
इति स्तुतस्त्रिदशवरैर्जगत्पते मरुत्पुरीनिलय गदात्प्रपाहि माम् ॥ ५१-१०॥

इति एकपञ्चाशत्तमदशकं समाप्तम् ।

## द्विपञ्चाशत्तमदशकम् (५२)

### वत्सस्तेयं तथा ब्रह्मगर्वशमनम् ।

### 52 - The Stealing of the Calves By Brahma And Humbling of Brahma's Pride.

अन्यावतारनिकरेष्वनिरीक्षितं ते भूमातिरेकमभिवीक्ष्य तदाघमोक्षे ।
ब्रह्मा परीक्षितुमनाः स परोक्षभावं निन्येऽथ वत्सकगणान्प्रवितत्य मायाम् ॥ ५२-१॥

वत्सानवीक्ष्य विवशे पशुपोत्करे तानानेतुकाम इव धातृमतानुवर्ती ।
त्वं सामिभुक्तकबलो गतवांस्तदानीं भुक्तांस्तिरोधित सरोजभवः कुमारान् ॥ ५२-२॥

वत्सायितस्तदनु गोपगणायितस्त्वं शिक्यादिभाण्डमुरलीगवलादिरूपः ।
प्राग्वद्विहृत्य विपिनेषु चिराय सायं त्वं माययाथ बहुधा व्रजमाययाथ ॥ ५२-३॥

त्वामेव शिक्यागवलादिमयं दधानो भूयस्त्वमेव पशुवत्सकबालरूपः ।
गोरूपिणीभिरपि गोपवधूमयीभिरासादितोऽसि जननीभिरतिप्रहर्षात् ॥ ५२-४॥

जीवं हि कञ्चिदभिमानवशात्स्वकीयं मत्वा तनूज इति रागभरं वहन्त्यः ।
आत्मानमेव तु भवन्तमवाप्य सूनुं प्रीतिं ययुर्न कियतीं वनिताश्च गावः ॥ ५२-५॥

एवं प्रतिक्षणविजृम्भितहर्षभारनिश्शेषगोपगणलालितभूरिमूर्तिम् ।
त्वामग्रजोऽपि बुबुधे किल वत्सरान्ते ब्रह्मात्मनोरपि महान्युवयोर्विशेषः ॥ ५२-६॥

वर्षावधौ नवपुरातनवत्सपालान् दृष्ट्वा विवेकमसृणे द्रुहिणे विमूढे ।

प्रादीदृशः प्रतिनवान्मकुटाङ्गदादिभूषांश्चतुर्भुजयुजः सजलाम्बुदाभान् ॥ ५२-७॥

प्रत्येकमेव कमलापरिलालिताङ्गान् भोगीन्द्रभोगशयनान्नयनाभिरामान् ।

लीलानिमीलितदृशः सनकादियोगिव्यासेवितान्कमलभूर्भवतो ददर्श ॥ ५२-८॥

नारायणाकृतिमसङ्ख्यतमां निरीक्ष्य सर्वत्र सेवकमपि स्वमवेक्ष्य धाता ।

मायानिमग्नहृदयो विमुमोह यावदेको बभूविथ तदा कबलार्धपाणिः ॥ ५२-९॥

नश्यन्मदे तदनु विश्वपतिं मुहुस्त्वां नत्वा च नूतवति धातरि धाम याते ।

पोतैः समं प्रमुदितैः प्रविशन्निकेतं वातालयाधिप विभो परिपाहि रोगात् ॥ ५२-१०॥

इति द्विपञ्चाशत्तमदशकं समाप्तं

## त्रिपञ्चाशत्तमदशकम् (५३)

## धेनुकासुरवधम् ।

## 53 - Slaying of Dhenukasura

अतीत्य बाल्यं जगतां पते त्वमुपेत्य पौगण्डवयो मनोज्ञम् ।

उपेक्ष्य वत्सावनमुत्सवेन प्रावर्तथा गोगणपालनायाम् ॥ ५३-१॥

उपक्रमस्यानुगुणैव सेयं मरुत्पुराधीश तव प्रवृत्तिः ।

गोत्रापरित्राणकृतेऽवतीर्णस्तदेव देवारभथास्तदा यत् ॥ ५३-२॥

कदापि रामेण समं वनान्ते वनश्रियं वीक्ष्य चरन्सुखेन ।
श्रीदामनाम्नः स्वसखस्य वाचा मोदादगा धेनुककाननं त्वम् ॥ ५३-३॥

उत्तालतालीनिवहे त्वदुक्त्या बलेन धूतेऽथ बलेन दोर्भ्याम् ।
मृदुः खरश्चाभ्यपतत्पुरस्तात् फलोत्करो धेनुकदानवोऽपि ॥ ५३-४॥

समुद्यतो धैनुकपालनेऽहं वधं कथं धैनुकमद्य कुर्वे ।
इतीव मत्वा ध्रुवमग्रजेन सुरौघयोद्धारमजीघतस्त्वम् ॥ ५३-५॥

तदीयभृत्यानपि जम्बुकत्वेनोपागतानग्रजसंयुतस्त्वम् ।
जम्बूफलानीव तदा निरास्थस्तालेषु खेलन्भगवन् निरास्थः ॥ ५३-६॥

विनिघ्नति त्वय्यथ जम्बुकौघं सनामकत्वाद्वरुणस्तदानीम् ।
भयाकुलो जम्बुकनामधेयं श्रुतिप्रसिद्धं व्यधितेति मन्ये ॥ ५३-७॥

तवावतारस्य फलं मुरारे सञ्जातमद्येति सुरैर्नुतस्त्वम् ।
सत्यं फलं जातमिहेति हासी बालैः समं तालफलान्यभुङ्क्थाः ॥ ५३-८॥

मधुद्रवस्रुन्ति बृहन्ति तानि फलानि मेदोभरभृन्ति भुक्त्वा ।
तृप्तैश्च दृप्तैर्भवनं फलौघं वहद्भिरागाः खलु बालकैस्त्वम् ॥ ५३-९॥

हतो हतो धेनुक इत्युपेत्य फलान्यदद्भिर्मधुराणि लोकैः ।

जयेति जीवेति नुतो विभो त्वं मरुत्पुराधीश्वर पाहि रोगात् ॥ ५३-१०॥

इति त्रिपञ्चाशत्तमदशकं समाप्तम् ।

## चतुःपञ्चाशत्तमदशकम् (५४)

## कालियस्य कालिन्दीप्राप्तिः तथा विषबाधा

## 54 - Reason For Kaliya Coming To the Yamuna And Affliction by Poison.

त्वत्सेवोत्कः सौभरिर्नाम पूर्वं कालिन्द्यन्तर्द्वादशाब्दं तपस्यन् ।२६

मीनव्राते स्नेहवान्भोगलोले तार्क्ष्यं साक्षादैक्षताग्रे कदाचित् ॥ ५४-१॥

त्वद्वाहं तं सक्षुधं तृक्षसूनुं मीनं कञ्चिज्जक्षतं लक्षयन् सः ।

तप्तश्चित्ते शप्तवानत्र चेत्त्वं जन्तून् भोक्ता जीवितं चापि मोक्ता ॥ ५४-२॥

तस्मिन्काले कालियः क्ष्वेलदर्पात्सर्परातेः कल्पितं भागमश्नन् ।

तेन क्रोधात्त्वत्पदाम्भोजभाजा पक्षक्षिप्तस्तद्दुरापं पयोऽगात् ॥ ५४-३॥

घोरे तस्मिन्सूरजानीरवासे तीरे वृक्षा विक्षताः क्ष्वेलवेगात् ।

पक्षिव्राताः पेतुरभ्रे पतन्तः कारुण्यार्द्रं त्वन्मनस्तेन जातम् ॥ ५४-४॥

काले तस्मिन्नेकदा सीरपाणिं मुक्त्वा याते यामुनं काननान्तम् ।

त्वय्युद्दामग्रीष्मभीष्मोष्मतप्ता गोगोपाला व्यापिबन् क्ष्वेलतोयम् ॥ ५४-५॥

नश्यज्जीवान् विच्युतान् क्ष्मातले तान् विश्वान् पश्यन्नच्युत त्वं दयार्द्रः ।
प्राप्योपान्तं जीवयामासिथ द्राक् पीयूषाम्भोवर्षिभिः श्रीकटाक्षैः ॥ ५४-६॥

किं किं जातो हर्षवर्षातिरेकः सर्वाङ्गेष्वित्युत्थिता गोपसङ्घाः ।
दृष्ट्वाऽग्रे त्वां त्वत्कृतं तद्विदन्तस्त्वामालिङ्गन् दृष्टनानाप्रभावाः ॥ ५४-७॥

गावश्चैवं लब्धजीवाः क्षणेन स्फीतानन्दास्त्वां च दृष्ट्वा पुरस्तात् ।
द्रागावव्रुः सर्वतो हर्षबाष्पं व्यामुञ्चन्त्यो मन्दमुद्यन्निनादाः ॥ ५४-८॥

रोमाञ्चोऽयं सर्वतो नः शरीरे भूयस्यन्तः काचिदानन्दमूर्छा ।
आश्चर्योऽयं क्ष्वेलवेगो मुकुन्देत्युक्तो गोपैर्नन्दितो वन्दितोऽभूः ॥ ५४-९॥

एवं भक्तान्मुक्तजीवानपि त्वं मुग्धापाङ्गैरस्तरोगांस्तनोषि ।
तादृग्भूतस्फीतकारुण्यभूमा रोगात्पाया वायुगेहाधिनाथ ॥ ५४-१०॥

इति चतुःपञ्चाशत्तमदशकं समाप्तम् ।

## पञ्चपञ्चाशत्तमदशकम् (५५)

### कालियनर्तनम् ।

### 55 - Krishna's Dance On Kaliya

अथ वारिणि घोरतरं फणिनं प्रतिवारयितुं कृतधीर्भगवन् ।

द्रुतमारिथ तीरगनीपतरुं विषमारुतशोषितपर्णचयम् ॥ ५५-१॥

अधिरुह्य पदाम्बुरुहेण च तं नवपल्लवतुल्यमोज्ञरुचा ।

ह्रदवारिणि दूरतरं न्यपतः परिघूर्णितघोरतरङ्गगणे ॥ ५५-२॥

भुवनत्रयभारभृतो भवतो गुरुभारविकम्पिविजृम्भिजला ।

परिमज्जयति स्म धनुःशतकं तटिनी झटिति स्फुटघोषवती ॥ ५५-३॥

अथ दिक्षु विदिक्षु परिक्षुभितभ्रमितोदरवारिनिनादभरैः ।

उदकादुदगादुरगाधिपतिस्त्वदुपान्तमशान्तरुषान्धमनाः ॥ ५५-४॥

फणशृ्ङ्गसहस्रविनिस्सृमरज्वलदग्निकणोग्रविषाम्बुधरम् ।

पुरतः फणिनं समलोकयथा बहुशृ्ङ्गिणमञ्जनशैलमिव ॥ ५५-५॥

ज्वलदक्षिपरिक्षरदुग्रविषश्वसनोष्मभरः स महाभुजगः ।

परिदंश्य भवन्तमनन्तबलं समवेष्टयदस्फुटचेष्टमहो ॥ ५५-६॥

अविलोक्य भवन्तमथाकुलिते तटगामिनि बालकधेनुगणे ।

व्रजगेहतलेऽप्यनिमित्तशतं समुदीक्ष्य गता यमुनां पशुपाः ॥ ५५-७॥

अखिलेषु विभो भवदीयदशामवलोक्य जिहासुषु जीवभरम् ।

फणिबन्धनमाशु विमुच्य जवादुदगम्यत हासजुषा भवता ॥ ५५-८॥

अधिरुह्य ततः फणिराजफणान्ननृते भवता मृदुपादरुचा ।
कलशिञ्जितनूपुरमञ्चुमिलत्करकङ्कणसङ्कुलसङ्क्वणितम् ॥ ५५-९॥

जहृषुः पशुपास्तुतुषुर्मुनयो ववृषुः कुसुमानि सुरेन्द्रगणाः ।
त्वयि नृत्यति मारुतगेहपते परिपाहि स मां त्वमदान्तगदात् ॥ ५५-१०॥

इति पञ्चपञ्चात्तमदशकं समाप्तम् ।

## षट्पञ्चाशत्तमदशकम् (५६)

## कालियगर्वशमनं तथा भगवदनुग्रहम् ।

## 56 - Humbling of Kalia's Pride And Lord Blessing Kaliya

रुचिरकम्पितकुण्डलमण्डलः सुचिरमीश ननर्तिथ पन्नगे ।
अमरताडितदुन्दुभिसुन्दरं वियति गायति दैवतयौवते ॥ ५६-१॥

नमति यद्यदमुष्य शिरो हरे परिविहाय तदुन्नतमुन्नतम् ।
परिमथन्पदपङ्करुहा चिरं व्यहरथाः करतालमनोहरम् ॥ ५६-२॥

त्वदवभग्नविभुग्नफणागणे गलितशोणितशोणितपाथसि ।
फणिपतावववसीदति सन्नतास्तदबलास्तव माधव पादयोः ॥ ५६-३॥

अयि पुरैव चिराय परिश्रुतत्वदनुभावविलीनहृदो हि ताः ।
मुनिभिरप्यनवाप्यपथैः स्तवैर्नुनुवुरीश भवन्तमयन्त्रितम् ॥ ५६-४॥

फणिवधूजनभक्तिविलोकनप्रविकसत्करुणाकुलचेतसा ।
फणिपतिर्भवताच्युत जीवितस्त्वयि समर्पितमूर्तिरवानमत् ॥ ५६-५॥

रमणकं व्रज वारिधिमध्यगं फणिरिपुर्न करोति विरोधिताम् ।
इति भवद्वचनान्यतिमानयन् फणिपतिर्निरगादुरगैः समम् ॥ ५६-६॥

फणिवधूजनदत्तमणिव्रजज्वलितहारदुकूलविभूषितः ।
तटगतैः प्रमदाश्रुविमिश्रितैः समगथाः स्वजनैर्दिवसावधौ ॥ ५६-७॥

निशि पुनस्तमसा व्रजमन्दिरं व्रजितुमक्षम एव जनोत्करे ।
स्वपति तत्र भवच्चरणाश्रये दवकृशानुररुन्ध समन्ततः ॥ ५६-८॥

प्रबुधितानथ पालय पालयेत्युदयदार्तरवान् पशुपालकान् ।
अवितुमाशु पपाथ महानलं किमिह चित्रमयं खलु ते मुखम् ॥ ५६-९॥

शिखिन वर्णत एव हि पीतता परिलसत्युधना क्रिययाऽप्यसौ ।
इति नुतः पशुपैर्मुदितैर्विभो हर हरे दुरितैः सह मे गदान् ॥ ५६-१०॥

इति षट्पञ्चाशत्तमदशकं समाप्तं

## सप्तपञ्चाशत्तमदशकम् (५७)

## प्रलम्बासुरवधम् ।

## 57 - Slaying of Pralambasura

रामसखः क्वापि दिने कामद भगवन् गतो भवान्विपिनम् ।
सूनुभिरपि गोपानां धेनुभिरभिसंवृतो लसद्वेषः ॥ ५७-१॥

सन्दर्शयन्बलाय स्वैरं वृन्दावनश्रियं विमलाम् ।
काण्डीरैः सह बालैर्भाण्डीरकमागमो वटं क्रीडन् ॥ ५७-२॥

तावत्तावकनिधनस्पृहयालुर्गोपमूर्तिरदयालुः ।
दैत्यः प्रलम्बनामा प्रलम्बबाहुं भवन्तमापेदे ॥ ५७-३॥

जानन्नप्यविजानन्निव तेन समं निबद्धसौहार्दः ।
वटनिकटे पटुपशुपव्याबद्धं द्वन्द्वयुद्धमारब्धाः ॥ ५७-४॥

गोपान्विभज्य तन्वन्सङ्घं बलभद्रकं भवत्कमपि ।
त्वद्बलभीरुं दैत्यं त्वद्बलगतमन्वमन्यथा भगवन् ॥ ५७-५॥

कल्पितविजेतृवहने समरे परयूथगं स्वदयिततरम् ।
श्रीदामानमधत्थाः पराजितो भक्तदासतां प्रथयन् ॥ ५७-६॥

एवं बहुषु विभूमन् बालेषु वहत्सु वाह्यमानेषु ।
रामविजितः प्रलम्बो जहार तं दूरतो भवद्भीत्या ॥ ५७-७॥

त्वद्दूरं गमयन्तं तं दृष्ट्वा हलिनि विहितगरिमभरे ।
दैत्यः स्वरूपमागाद्यद्रूपात्स हि बलोऽपि चकितोऽभूत् ॥ ५७-८॥

उच्चतया दैत्यतनोस्त्वन्मुखमालोक्य दूरतो रामः ।
विगतभयो दृढमुष्ट्या भृशदुष्टं सपदि पिष्टवानेनम् ॥ ५७-९॥

हत्वा दानववीरं प्राप्तं बलमालिलिङ्गिथ प्रेम्णा ।
तावन्मिलतोर्युवयोः शिरसि कृता पुष्पवृष्टिरमरगणैः ॥ ५७-१०॥

आलम्बो भुवनानां प्रालम्बं निधनमेवमारचयन् ।
कालं विहाय सद्यो लोलम्बरुचे हरे हर क्लेशान् ॥ ५७-११॥२७

इति सप्तपञ्चाशत्तमदशकं समाप्तं

अष्टपञ्चाशत्तमदशकम् (५८)

दावाग्निसंरक्षणं तथा ऋतुवर्णनम् ।

## 58 - Rescue From Forest Fire and Description of Seasons

त्वयि विहरणलोले बालजालैः प्रलम्ब-
प्रमथनसविलम्बे धेनवः स्वैरचाराः ।
तृणकुतुकनिविष्टा दूरदूरं चरन्त्यः
किमपि विपिनमैषीकाख्यमीषाम्बभूवुः ॥ ५८-१॥

अनधिगतनिदाघक्रौर्यवृन्दावनान्तात्
बहिरिदमुपयाताः काननं धेनवस्ताः ।
तव विरहविषण्णा ऊष्मलग्रीष्मताप-
प्रसरविसरदम्भस्याकुलाः स्तम्भमापुः ॥ ५८-२॥

तदनु सह सहायैर्दूरमन्विष्य शौरे
गलितसरणिमुञ्जारण्यसञ्जातखेदम् ।
पशुकुलमभिवीक्ष्य क्षिप्रमानेतुमारात्
त्वयि गतवति ही ही सर्वतोऽग्निर्जजृम्भे ॥ ५८-३॥

सकलहरिति दीप्ते घोरभाङ्कारभीमे
शिखिनि विहतमार्गा अर्धदग्धा इवार्ताः ।
अहह भुवनबन्धो पाहि पाहीति सर्वे
शरणमुपगतास्त्वां तापहर्तारमेकम् ॥ ५८-४॥

अलमलमतिभीत्य सर्वतो मीलयध्वं
भृशमिति तव वाचा मीलिताक्षेषु तेषु ।
क्वनु दवदहनोऽसौ कुत्र मुञ्जाटवी सा

सपदि ववृतिरे ते हन्त भण्डीरदेशे ॥ ५८-५॥

जय जय तव माया केयमीशेति तेषां
नुतिभिरुदितहासो बद्धनानाविलासः ।
पुनरपि विपिनान्ते प्राचरः पाटलादि-
प्रसवनिकरमात्रग्राह्यघर्मानुभावे ॥ ५८-६॥

त्वयि विमुखविमोच्चैस्तापभारं वहन्तं
तव भजनवदन्तः पङ्कमुच्छोषयन्तम् ।
तव भुजवदुदञ्चद्भूरितेजःप्रवाहं
तपसमयमनैषीर्यामुनेषु स्थलेषु ॥ ५८-७॥

तदनु जलदजालैस्त्वद्वपुस्तुल्यभाभि-
र्विकसदमलविद्युत्पीतवासोविलासैः ।
सकलभुवनभाजां हर्षदां वर्षवेलां
क्षितिधरकुहरेषु स्वैरवासी व्यनैषीः ॥ ५८-८॥

कुहरतलनिविष्टं त्वां गरिष्ठं गिरीन्द्रः
शिखिकुलनवकेकाकाकुभिः स्तोत्रकारी ।
स्फुटकुटजकदम्बस्तोमपुष्पाञ्जलिं च
प्रविदधदनुभेजे देव गोवर्धनोऽसौ ॥ ५८-९॥

अथ शरदमुपेतां तां भवद्भक्तचेतो-

विमलसलिलपूरां मानयन्काननेषु ।
तृणममलवनान्ते चारु सञ्चारयन् गाः२७
पवनपुरपते त्वं देहि मे देहसौख्यम् ॥ ५८-१०॥

इति अष्टपञ्चाशत्तमदशकं समाप्तम् ।

## एकोनषष्टितमदशकम् (५९)

## वेणुगानवर्णनम् ।

## 59 - Krishna Playing the Flute

त्वद्वपुर्नवकलायकोमलं प्रेमदोहनमशेषमोहनम् ।
ब्रह्मतत्त्वपरचिन्मुदात्मकं वीक्ष्य सम्मुमुहुरन्वहं स्त्रियः ॥ ५९-१॥

मन्मथोन्मथितमानसाः क्रमात्त्वद्विलोकनरतास्ततस्ततः ।
गोपिकास्तव न सेहिरे हरे काननोपगतिमप्यहर्मुखे ॥ ५९-२॥

निर्गते भवति दत्तदृष्टयस्त्वद्गतेन मनसा मृगेक्षणाः ।
वेणुनादमुपकर्ण्य दूरतस्त्वद्विलासकथयाभिरेमिरे ॥ ५९-३॥

काननान्तमितवान्भवानपि स्निग्धपादपतले मनोरमे ।
व्यत्ययाकलितपादमास्थितः प्रत्यपूरयत वेणुनालिकाम् ॥ ५९-४॥

मारबाणधुतखेचरीकुलं निर्विकारपशुपक्षिमण्डलम् ।
द्रावणं च दृषदामपि प्रभो तावकं व्यजनि वेणुकूजितम् ॥ ५९-५॥

वेणुरन्ध्रतरलाङ्गुलीदलं तालसञ्चलितपादपल्लवम् ।
तत्स्थितं तव परोक्षमप्यहो संविचिन्त्य मुमुहुर्व्रजाङ्गनाः ॥ ५९-६॥

निर्विशङ्कभवदङ्गदर्शिनीः खेचरीः खगमृगान्पशूनपि ।
त्वत्पदप्रणयि काननं च ताः धन्यधन्यमिति नन्वमानयन् ॥ ५९-७॥

आपिबेयमधरामृतं कदा वेणुभुक्तरसशेषमेकदा ।
दूरतो बत कृतं दुराशयेत्याकुला मुहुरिमाः समामुहन् ॥ ५९-८॥

प्रत्यहं च पुनरित्थमङ्गनाश्चित्तयोनिजनितादनुग्रहात् ।
बद्धरागविवशास्त्वयि प्रभो नित्यमापुरिह कृत्यमूढताम् ॥ ५९-९॥

रागस्तावज्जायते हि स्वभावान्मोक्षोपायो यत्नतः स्यान्न वा स्यात् ।
तासां त्वेकं तद्द्वयं लब्धमासीद्भाग्यं भाग्यं पाहि मां मारुतेश ॥ ५९-१०॥

इति एकोनषष्टितमदशकं समाप्तम् ।

## षष्टितमदशकम् (६०)

## गोपीवस्त्रापहरणम् ।

## 60 - Stealing the Clothes of the Gopikas

मदनातुरचेतसोऽन्वहं भवदङ्घ्रिद्वयदास्यकाम्यया ।
यमुनातटसीम्नि सैकतीं तरलाक्ष्यो गिरिजां समार्चिचन् ॥ ६०-१॥

तव नामकथारताः समं सुदृशः प्रातरुपागता नदीम् ।
उपहारशतैरपूजयन् दयितो नन्दसुतो भवेदिति ॥ ६०-२॥

इति मासमुपाहितव्रतास्तरलाक्षीरभिवीक्ष्य ता भवान् ।
करुणामृदुलो नदीतटं समयासीत्तदनुग्रहेच्छया ॥ ६०-३॥

नियमावसितौ निजाम्बरं तटसीमन्यवमुच्य तास्तदा ।
यमुनाजलखेलनाकुलाः पुरतस्त्वामवलोक्य लज्जिताः ॥ ६०-४॥

त्रपया नमिताननास्वथो वनितास्वम्बरजालमन्तिके ।
निहितं परिगृह्य भूरुहो विटपं त्वं तरसाधिरूढवान् ॥ ६०-५॥

इह तावदुपेत्य नीयतां वसनं वः सुदृशो यथायथम् ।
इति नर्ममृदुस्मिते त्वयि ब्रुवति व्यामुमुहे वधूजनैः ॥ ६०-६॥२८

अयि जीव चिरं किशोर नस्तव दासीरवशीकरोषि किम् ।
प्रदिशाम्बरमम्बुजेक्षणेत्युदितस्त्वं स्मितमेव दत्तवान् ॥ ६०-७॥

अधिरुह्य तटं कृताञ्जलीः परिशुद्धाः स्वगतीर्निरीक्ष्य ताः ।

वसनान्यखिलान्यनुग्रहं पुनरेवं गिरमप्यदा मुदा ॥ ६०-८॥

विदितं ननु वो मनीषितं वदितारस्त्विह योग्यमुत्तरम् ।

यमुनापुलिने सचन्द्रिकाः क्षणदा इत्यबलास्त्वमूचिवान् ॥ ६०-९॥

उपकर्ण्य भवन्मुखच्युतं मधुनिष्यन्दि वचो मृगीदृशः ।

प्रणयादयि वीक्ष्य वीक्ष्य ते वदनाब्जं शनकैर्गृहं गताः ॥ ६०-१०॥

इति नन्वनुगृह्य वल्लवीर्विपिनान्तेषु पुरेव सञ्चरन् ।२९

करुणाशिशिरो हरे हर त्वरया मे सकलामयावलिम् ॥ ६०-११॥

इति षष्टितमदशकं समाप्तं

## एकषष्टितमदशकम् (६१)

## विप्रपत्न्यनुग्रहम् ।

## 61 - Blessing the Wives of the Performers of Vedic Sacrifices

ततश्च वृन्दावनतोऽतिदूरतो वनं गतस्त्वं खलु गोपगोकुलैः ।

हृदन्तरे भक्ततरद्विजाङ्गनाकदम्बकानुग्रहणाग्रहं वहन् ॥ ६१-१॥

ततो निरीक्ष्याशरणे वनान्तरे किशोरलोकं क्षुधितं तृषाकुलम् ।

अदूरतो यज्ञपरान् द्विजान्प्रति व्यसर्जयो दीदिवियाचनाय तान् ॥ ६१-२॥

गतेष्वथो तेष्वभिधाय तेऽभिधां कुमारकेष्वोदनयाचिषु प्रभो ।
श्रुतिस्थिरा अप्यभिनिन्युरश्रुतिं न किञ्चिदूचुश्च महीसुरोत्तमाः ॥ ६१-३॥

अनादरात्खिन्नधियो हि बालकाः समाययुर्युक्तमिदं हि यज्वसु ।
चिरादभक्ताः खलु ते महीसुराः कथं हि भक्तं त्वयि तैः समर्प्यते ॥ ६१-४॥

निवेदयध्वं गृहिणीजनाय मां दिशेयुरन्नं करुणाकुला इमाः ।
इति स्मितार्द्रं भवतेरिता गतास्ते दारका दारजनं ययाचिरे ॥ ६१-५॥

गृहीतनाम्नि त्वयि सम्भ्रमाकुलाश्चतुर्विधं भोज्यरसं प्रगृह्य ताः ।
चिरं धृतत्वत्प्रविलोकनाग्रहाः स्वकैर्निरुद्धा अपि तूर्णमाययुः ॥ ६१-६॥

विलोलपिञ्छं चिकुरे कपोलयोः समुल्लसत्कुण्डलमार्द्रमीक्षिते ।
निधाय बाहुं सुहृदंससीमनि स्थितं भवन्तं समलोकयन्त ताः ॥ ६१-७॥

तदा च काचित्त्वदुपागमोद्यता गृहीतहस्ता दयितेन यज्वना ।
तदैव सञ्चिन्त्य भवन्तमञ्जसा विवेश कैवल्यमहो कृतिन्यसौ ॥ ६१-८॥

आदाय भोज्यान्यनुगृह्य ताः पुनस्त्वदङ्गसङ्गस्पृहयोज्झतीर्गृहम् ।
विलोक्य यज्ञाय विसर्जयन्निमाश्चकर्थ भर्तॄनपि तास्वगर्हणान् ॥ ६१-९॥

निरूप्य दोषं निजमङ्गनाजने विलोक्य भक्तिं च पुनर्विचारिभिः ।

प्रबुद्धतत्त्वैस्त्वमभिष्टुतो द्विजैर्मरुत्पुराधीश निरुन्धि मे गदान् ॥ ६१-१०॥

इति एकषष्टितमदशकं समाप्तम् ।

## द्विषष्टितमदशकम् (६२)

इन्द्रयज्ञनिरोधनं तथा गोवर्धनयागम् ।

## 62 - Blocking of the Sacrifice To Indra And Performance of Sacrifice to Govardhana

कदाचिद्गोपालान् विहितमखसम्भारविभवान्

निरीक्ष्य त्वं शौरे मघवमदमुध्वंसितुमनाः ।

विजानन्नप्येतान् विनयमृदु नन्दादिपशुपा-

नपृच्छः को वायं जनक भवतामुद्यम इति ॥ ६२-१॥

बभाषे नन्दस्त्वां सुत ननु विधेयो मघवतो

मखो वर्षे वर्षे सुखयति स वर्षेण पृथिवीम् ।

नृणां वर्षायत्तं निखिलमुपजीव्यं महितले

विशेषादस्माकं तृणसलिलजीवा हि पशवः ॥ ६२-२॥

इति श्रुत्वा वाचं पितुरयि भवानाह सरसं

धिगेतन्नो सत्यं मघवजनिता वृष्टिरिति यत् ।

अदृष्टं जीवानां सृजति खलु वृष्टिं समुचितां

महारण्ये वृक्षाः किमिव बलिमिन्द्राय ददते ॥ ६२-३॥

इदं तावत्सत्यं यदिह पशवो नः कुलधनं
तदाजीव्यायासौ बलिरचलभर्त्रे समुचितः ।
सुरेभ्योऽप्युत्कृष्टा ननु धरणिदेवाः क्षितितले
ततस्तेऽप्याराध्या इति जगदिथ त्वं निजजनान् ॥ ६२-४॥३०

भवद्वाचं श्रुत्वा बहुमतियुतास्तेऽपि पशुपा
द्विजेन्द्रानर्चन्तो बलिमददुरुच्चैः क्षितिभृते ।
व्यधुः प्रादक्षिण्यं सुभृशमनमन्नादरयुता-
स्त्वमादः शैलात्मा बलिमखिलमाभीरपुरतः ॥ ६२-५॥

अवोचश्चैवं तान्किमिह वितथं मे निगदितं
गिरीन्द्रो नन्वेषु स्वबलिमुपभूङ्क्ते स्ववपुषा ।
अयं गोत्रो गोत्रद्विषि च कुपिते रक्षितुमलं
समस्तानित्युक्ता जहृषुरखिला गोकुलजुषः ॥ ६२-६॥

परिप्रीता याताः खलु भवदुपेता व्रजजुषो
व्रजं यावत्तावन्निजमखविभङ्गं निशमयन् ।
भवन्तं जानन्नप्यधिकरजसाऽऽक्रान्तहृदयो
न सेहे देवेन्द्रस्त्वदुपरचितात्मोन्नतिरपि ॥ ६२-७॥

मनुष्यत्वं यातो मधुभिदपि देवेष्वविनयं

विधत्ते चेन्नष्टस्त्रिदशसदसां कोऽपि महिमा ।

ततश्च ध्वंसिष्ये पशुपहतकस्य श्रियमिति

प्रवृत्तस्त्वां जेतुं स किल मघवा दुर्मदनिधिः ॥ ६२-८॥

त्वदावासं हन्तुं प्रलयजलदानम्बरभुवि

प्रहिण्वन् बिभ्राणः कुलिशमयमभ्रेभगमनः ।

प्रतस्थेऽन्यैरन्तर्दहनमरुदाद्यैर्विहसितो

भवन्माया नैव त्रिभुवनपते मोहयति कम् ॥ ६२-९॥

सुरेन्द्रः क्रुद्धश्चेद्द्विजकरुणया शैलकृपया-

प्यनातङ्कोऽस्माकं नियत इति विश्वास्य पशुपान् ।

अहो किं नायातो गिरिभिदिति सञ्चिन्त्य निवसन्

मरुद्गेहाधीश प्रणुद मुरवैरिन् मम गदान् ॥ ६२-१०॥

इति द्विषष्टितमदशकं समाप्तम् ।

त्रिषष्टितमदशकम् (६३)

गोवर्धनोद्धारणम् ।

63 - Holding Up the Govardhana Mountain

ददृशिरे किल तत्क्षणमक्षतस्तनितजृम्भितकम्पितदिक्तटाः ।

सुषमया भवदङ्गतुलां गता व्रजपदोपरि वारिधरास्त्वया ॥ ६३-१॥

विपुलकरकमिश्रैस्तोयधारानिपातै-

र्दिशि दिशि पशुपानां मण्डले दण्ड्यमाने ।

कुपितहरिकृतान्नः पाहि पाहीति तेषां

वचनमजित श्रुण्वन्मा बिभीतेत्यभाणीः ॥ ६३-२॥

कुल इह खलु गोत्रो दैवतं गोत्रशत्रो-

र्विहतिमिह स रुन्ध्यात्को नुः वः संशायोऽस्मिन् ।

इति सहसितवादी देव गोवर्धनाद्रिं

त्वरितमुदमुमूलो मूलतो बालदोर्भ्याम् ॥ ६३-३॥

तदनु गिरिवरस्य प्रोद्धृतस्यास्य तावत्

सिकतिलमृदुदेशे दूरतो वारितापे ।

परिकरपरिमिश्रान्धेनुगोपानधस्ता-

दुपनिदधदधत्था हस्तपद्मेन शैलम् ॥ ६३-४॥

भवति विधृतशैले बालिकाभिर्वयस्यै-

रपि विहितविलासं केलिलापादिलोले ।

सविधमिलितधेनूरेकहस्तेन कण्डू-

यति सति पशुपालास्तोषमैषन्त सर्वे ॥ ६३-५॥

अतिमहान् गिरिरेष तु वामके करसरोरुहि तं धरते चिरम् ।

किमिदमद्भुतमद्रिबलन्विति त्वदवलोकिभिराकथि गोपकैः ॥ ६३-६॥

अहह धाष्टर्यममुष्य वटोर्गिरिं व्यथितबाहुरसाववरोपयेत् ।
इति हरिस्त्वयि बद्धविगर्हणो दिवससप्तकमुग्रमवर्षयत् ॥ ६३-७॥

अचलति त्वयि देव पदात्पदं गलितसर्वजले च घनोत्करे ।
अपहृते मरुता मरुतां पतिस्त्वदभिशङ्कितधीः समुपाद्रवत् ॥ ६३-८॥

शममुपेयुषि वर्षभरे तदा पशुपधेनुकुले च विनिर्गते ।
भुवि विभो समुपाहितभूधरः प्रमुदितैः पशुपैः परिरेभिषे ॥ ६३-९॥

धरणिमेव पुरा धृतवानसि क्षितिधरोद्धरणे तव कः श्रमः ।
इति नुतस्त्रिदशैः कमलापते गुरुपुरालय पालय मां गदात् ॥ ६३-१०॥

इति त्रिषष्टितमदशकं समाप्तम् ।

## चतुःषष्टितमदशकम् (६४)

## गोविन्दपट्टाभिषेकम् ।

## 64 - Crowning As Govinda

आलोक्य शैलोद्धरणादिरूपं प्रभावमुच्चैस्तव गोपलोकाः ।
विश्वेश्वरं त्वामभिमत्य विश्वे नन्दं भवज्जातकमन्वपृच्छन् ॥ ६४-१॥

गर्गोदितो निर्गदितो निजाय वर्गाय तातेन तव प्रभावः ।

पूर्वाधिकस्त्वय्यनुराग एषामैधिष्ट तावद्बहुमानभारः ॥ ६४-२॥

ततोऽवमानोदिततत्त्वबोधः सुराधिराजः सह दिव्यगव्या ।

उपेत्य तुष्टाव स नष्टगर्वः स्पृष्ट्वा पदाब्जं मणिमौलिना ते ॥ ६४-३॥

स्नेहस्नुतैस्त्वां सुरभिः पयोभिर्गोविन्दनामाङ्कितमभ्यषिञ्चत् ।

ऐरावतोपाहृतदिव्यगङ्गापाथोभिरिन्द्रोऽपि च जातहर्षः ॥ ६४-४॥

जगत्त्रयेशे त्वयि गोकुलेशे तथाऽभिषिक्ते सति गोपवाटः ।

नाकेऽपि वैकुण्ठपदेऽप्यलभ्यां श्रियं प्रपेदे भवतः प्रभावात् ॥ ६४-५॥३१

कदाचिदन्तर्यमुनं प्रभाते स्नायन् पिता वारुणपूरुषेण ।

नीतस्तमानेतुमगाः पुरीं त्वं तां वारुणीं कारणमर्त्यरूपः ॥ ६४-६॥

ससम्भ्रमं तेन जलाधिपेन प्रपूजितस्त्वं प्रतिगृह्य तातम् ।

उपागतस्तत्क्षणमात्मगेहं पिताऽवदत्तच्चरितं निजेभ्यः ॥ ६४-७॥

हरिं विनिश्चित्य भवन्तमेतान् भवत्पदालोकनबद्धतृष्णान् ।

निरीक्ष्य विष्णो परमं पदं तद्दुरापमन्यैस्त्वमदीदृशस्तान् ॥ ६४-८॥

स्फुरत्परानन्दरसप्रवाहप्रपूर्णकैवल्यमहापयोधौ ।

चिरं निमग्नाः खलु गोपसङ्घास्त्वयैव भूमन् पुनरुद्धृतास्ते ॥ ६४-९॥

करबदरवदेवं देव कुत्रावतारे

निजपदमनवाप्यं दर्शितं भक्तिभाजाम् ।

तदिह पशुपरूपी त्वं हि साक्षात्परात्मा

पवनपुरनिवासिन् पाहि मामामयेभ्यः ॥ ६४-१०॥

इति चतुःषष्टितमदशकं समाप्तम् ।

## पञ्चषष्टितमदशकम् (६५)

### गोपिकानां भगवत्सामीप्यप्राप्तिः ।

### 65 - Gopikas' Coming To Krishna

गोपीजनाय कथितं नियमावसाने

मारोत्सवं त्वमथ साधयितुं प्रवृत्तः ।

सान्द्रेण चान्द्रमहसा शिशिरीकृताशे

प्रापूरयो मुरलिकां यमुनावनान्ते ॥ ६५-१॥

सम्मूर्छनाभिरुदितस्वरमण्डलाभिः

सम्मूर्छयन्तमखिलं भुवनान्तरालम् ।

त्वद्वेणुनादमुपकर्ण्य विभो तरुण्य-

स्तत्तादृशं कमपि चित्तविमोहमापुः ॥ ६५-२॥

ता गेहकृत्यनिरतास्तनयप्रसक्ताः
कान्तोपसेवनपराश्च सरोरुहाक्ष्यः ।
सर्वं विसृज्य मुरलीरवमोहितास्ते
कान्तारदेशमयि कान्ततनो समेताः ॥ ६५-३॥

काश्चिन्निजाङ्गपरिभूषणमादधाना
वेणुप्रणादमुपकर्ण्य कृतार्धभूषाः ।
त्वामागता ननु तथैव विभूषिताभ्य-
स्ता एव संरुरुचिरे तव लोचनाय ॥ ६५-४॥

हारं नितम्बभुवि काचन धारयन्ती
काञ्चीं च कण्ठभुवि देव समागता त्वाम् ।
हारित्वमात्मजघनस्य मुकुन्द तुभ्यं
व्यक्तं बभाष इव मुग्धमुखी विशेषात् ॥ ६५-५॥

काचित्कुचे पुनरसज्जितकञ्चुलीका
व्यामोहतः परवधूभिरलक्ष्यमाणा ।
त्वामाययौ निरुपमप्रणयातिभार-
राज्याभिषेकविधये कलशीधरेव ॥ ६५-६॥

काश्चिद्गृहात्किल निरेतुमपारयन्त्य-
स्त्वामेव देव हृदये सुदृढं विभाव्य ।
देहं विधूय परचित्सुखरूपमेकं

त्वामाविशन्परमिमा ननु धन्यधन्याः ॥ ६५-७॥

जारात्मना न परमात्मतया स्मरन्त्यो

नार्यो गताः परमहंसगतिं क्षणेन ।

तत्त्वां प्रकाशपरमात्मतनुं कथञ्चि-

च्चित्ते वहन्नमृतमश्रममश्नुवीय ॥ ६५-८॥

अभ्यागताभिरभितो व्रजसुन्दरीभि-

र्मुग्धस्मितार्द्रवदनः करुणावलोकी ।

निस्सीमकान्तिजलधिस्त्वमवेक्ष्यमाणो

विश्वैकहृद्य हर मे परमेश रोगान् ॥ ६५-९॥

इति पञ्चषष्टितमदशकं समाप्तम् ।

## षट्षष्टितमदशकम् (६६)

## गोपीजनाह्लादनम् ।

## 66 - Delighting the Gopikas

उपयातानां सुदृशां कुसुमायुधबाणपातविवशानाम् ।

अभिवाञ्छितं विधातुं कृतमतिरपि ता जगाथ वाममिव ॥ ६६-१॥

गगनगतं मुनिनिवहं श्रावयितुं जगिथ कुलवधूधर्मम् ।

धर्म्यं खलु ते वचनं कर्म तु नो निर्मलस्य विश्वास्यम् ॥ ६६-२॥

आकर्ण्य ते प्रतीपां वाणीमेणीदृशः परं दीनाः ।
मा मा करुणासिन्धो परित्यजेत्यतिचिरं विलेपुस्ताः ॥ ६६-३॥

तासां रुदितैर्लपितैः करुणाकुलमानसो मुरारे त्वम् ।
ताभिः समं प्रवृत्तो यमुनापुलिनेषु काममभिरन्तुम् ॥ ६६-४॥

चन्द्रकरस्यन्दलसत्सुन्दरयमुनातटान्तवीथीषु ।
गोपीजनोत्तरीयैरापादितसंस्तरो न्यषीदस्त्वम् ॥ ६६-५॥

सुमधुरनर्मालपनैः करसङ्ग्रहणैश्च चुम्बनोल्लासैः ।
गाढालिङ्गनसङ्गैस्त्वमङ्गनालोकमाकुलीचकृषे ॥ ६६-६॥

वासोहरणदिने यद्वासोहरणं प्रतिश्रुतं तासाम् ।
तदपि विभो रसविवशस्वान्तानां कान्तसुभ्रुवामदधाः ॥ ६६-७॥

कन्दलितघर्मलेशं कुन्दमृदुस्मेरवक्त्रपाथोजम् ।
नन्दसुत त्वां त्रिजगत्सुन्दरमुपगूह्य नन्दिता बालाः ॥ ६६-८॥

विरहेष्वङ्गारमयः शृङ्गारमयश्च सङ्गमेऽपि त्वम् ।
नितरामङ्गारमयस्तत्र पुनः सङ्गमेऽपि चित्रमिदम् ॥ ६६-९॥

राधातुङ्गपयोधरसाधुपरीरम्भलोलुपात्मानम् ।
आराधये भवन्तं पवनपुराधीश शमय सकलगदान् ॥ ६६-१०॥

इति षट्षष्टितमदशकं समाप्तम् ।

## सप्तषष्टितमदशकम् (६७)

### श्रीकृष्णतिरोधानं तथा पुनः प्रत्यक्षीभूय गोपिकाः प्रीणनम् ।

### 67 - Disappearance of the Lord and Reappearance, Etc

स्फुरत्परानन्दरसात्मकेन त्वया समासादितभोगलीलाः ।
असीममानन्दभरं प्रपन्ना महान्तमापुर्मदमम्बुजाक्ष्यः ॥ ६७-१॥

निलीयतेऽसौ मयि मय्यमायं रमापतिर्विश्वमनोभिरामः ।
इतिस्म सर्वाः कलिताभिमाना निरीक्ष्य गोविन्द तिरोहितोऽभूः ॥ ६७-२॥

राधाभिधां तावदजातगर्वामतिप्रियां गोपवधूं मुरारे ।
भवानुपादाय गतो विदूरं तया सह स्वैरविहारकारी ॥ ६७-३॥

तिरोहितेऽथ त्वयि जाततापाः समं समेताः कमलायताक्ष्यः ।
वने वने त्वां परिमार्गयन्त्यो विषादमापुर्भगवन्नपारम् ॥ ६७-४॥

हा चूत हा चम्पक कर्णिकार हा मल्लिके मालति बालवल्ल्यः ।

किं वीक्षितो नो हृदयैकचोर इत्यादि तास्त्वत्प्रवणा विलेपुः ॥ ६७-५॥

निरीक्षितोऽयं सखि पङ्कजाक्षः पुरो ममेत्याकुलमालपन्ती ।
त्वां भावनाचक्षुषि वीक्ष्य काचित्तापं सखीनां द्विगुणीचकार ॥ ६७-६॥

त्वदात्मिकास्ता यमुनातटान्ते तवानुचक्रुः किल चेष्टितानि ।
विचित्य भूयोऽपि तथैव मानात्त्वया वियुक्तां ददृशुश्च राधाम् ॥ ६७-७॥

ततः समं ता विपिने समन्तात्तमोवतारावधि मार्गयन्त्यः ।
पुनर्विमिश्रा यमुनातटान्ते भृशं विलेपुश्च जगुर्गुणांस्ते ॥ ६७-८॥

तथाव्यथासङ्कुलमानसानां व्रजाङ्गनानां करुणैकसिन्धो ।
जगत्त्रयीमोहनमोहनात्मा त्वं प्रादुरासीरयि मन्दहासी ॥ ६७-९॥

सन्दिग्धसन्दर्शनमात्मकान्तं त्वां वीक्ष्य तन्व्यस्सहसा तदानीम् ।
किं किं न चक्रुः प्रमदातिभारात्स त्वं गदात्पालय मारुतेश ॥ ६७-१०॥

इति सप्तषष्टितमदशकं समाप्तम् ।

## अष्टषष्टितमदशकम् (६८)

## गपिकानां आह्लादप्रकटनम् ।

## 68 - Gopikas In the Lord's Joyous Company

तव विलोकनाद्गोपिकाजनाः प्रमदसङ्कुलाः पङ्कजेक्षण ।
अमृतधारया सम्प्लुता इव स्तिमिततां दधुस्त्वत्पुरोगताः ॥ ६८-१॥

तदनु काचन त्वत्कराम्बुजं सपदि गृह्णती निर्विशङ्कितम् ।
घनपयोधरे संविधाय सा पुलकसंवृता तस्थुषी चिरम् ॥ ६८-२॥

तव विभो पुरा कोमलं भुजं निजगलान्तरे पर्यवेष्टयत् ।
गलसमुद्गतं प्राणमारुतं प्रतिनिरुन्धतीवातिहर्षुला ॥ ६८-३॥

अपगतत्रपा कापि कामिनी तव मुखाम्बुजात्पूगचर्वितम् ।
प्रतिगृह्य्य तद्वक्त्रपङ्कजे निदधती गता पूर्णकामताम् ॥ ६८-४॥

विकरुणो वने संविहाय मामपगतोऽसि का त्वामिह स्पृशेत् ।
इति सरोषया तावदेकया सजललोचनं वीक्षितो भवान् ॥ ६८-५॥

इति मुदाकुलैर्वल्लवीजनैः सममुपागतो यामुने तटे ।
मृदुकुचाम्बरैः कल्पितासने घुसृणभासुरे पर्यशोभथाः ॥ ६८-६॥

कतिविधा कृपा केऽपि सर्वतो धृतदयोदयाः केचिदाश्रिते ।
कतिचिदीदृशा मादृशेष्वपीत्यभिहितो भवान्वल्लवीजनैः ॥ ६८-७॥

अयि कुमारिका नैव शङ्क्यतां कठिनता मयि प्रेमकातरे ।

मयि तु चेतसो वोऽनुवृत्तये कृतमिदं मयेत्यूचिवान्भवान् ॥ ६८-८॥

अयि निशम्यतां जीववल्लभाः प्रियतमो जनो नेदृशो मम ।
तदिह रम्यतां रम्ययामिनीष्वनुपरोधमित्यालपो विभो ॥ ६८-९॥

इति गिराधिकं मोदमेदुरैर्व्रजवधूजनैः साकमारमन् ।
कलितकौतुको रासखेलने गुरुपुरीपते पाहि मां गदात् ॥ ६८-१०॥

इति अष्टषष्टितमदशकं समाप्तम् ।

## एकोनसप्ततितमदशकम् (६९)

## रासक्रीडा ।

## 69 - Rasakreeda

केशपाशधृतपिञ्छिकावितति सञ्चलन्मकरकुण्डलं
हारजालवनमालिकाललितमङ्गरागघनसौरभम् ।
पीतचेलधृतकाञ्चिकाञ्चितमुदञ्चदंशुमणिनूपुरं
रासकेलिपरिभूषितं तव हि रूपमीश कलयामहे ॥ ६९-१॥

तावदेव कृतमण्डने कलितकञ्चुलीककुचमण्डले
गण्डलोलमणिकुण्डले युवतिमण्डलेऽथ परिमण्डले ।
अन्तरा सकलसुन्दरीयुगलमिन्दिरारमण सञ्चरन्

मञ्जुलां तदनु रासकेलिमयि कञ्जनाभ समुपादधाः ॥ ६९-२॥

वासुदेव तव भासमानमिह रासकेलिरससौरभं
दूरतोऽपि खलु नारदागदितमाकलय्य कुतुकाकुलाः ।
वेषभूषणविलासपेशलविलासिनीशतसमावृता
नाकतो युगपदागता वियति वेगतोऽथ सुरमण्डली ॥ ६९-३॥

वेणुनादकृततानदानकलगानरागगतियोजना-
लोभनीयमृदुपादपातकृततालमेलनमनोहरम् ।
पाणिसङ्क्वणितकङ्कणं च मुहुरंसलम्बितकराम्बुजं
श्रोणिबिम्बचलदम्बरं भजत रासकेलिरसडम्बरम् ॥ ६९-४॥

श्रद्धया विरचितानुगानकृततारतारमधुरस्वरे
नर्तनेऽथ ललिताङ्गहारलुलिताङ्गहारमणिभूषणे ।
सम्मदेन कृतपुष्पवर्षमलमुन्मिषद्दिविषदां कुलं
चिन्मये त्वयि निलीयमानमिव सम्मुमोह सवधूकुलम् ॥ ६९-५॥

स्विन्नसन्नतनुवल्लरी तदनु कापि नाम पशुपाङ्गना
कान्तमंसमवलम्बते स्म तव तान्तिभारमुकुलेक्षणा ।
काचिदाचलितकुन्तला नवपटीरसारनवसौरभं
वञ्चनेन तव सञ्चुचुम्ब भुजमञ्चितोरुपुलकाङ्कुरम् ॥ ६९-६॥

कापि गण्डभुवि सन्निधाय निजगण्डमाकुलितकुण्डलं

पुण्यपूरनिधिरन्ववाप तव पूगचर्वितरसामृतम् ।
इन्दिराविहृतिमन्दिरं भुवनसुन्दरं हि नटनान्तरे
त्वामवाप्य दधुरङ्गनाः किमु न सम्मदोन्मददशान्तरम् ॥ ६९-७॥

गानमीश विरतं क्रमेण किल वाद्यमेलनमुपारतं
ब्रह्मसम्मदरसाकुलाः सदसि केवलं ननृतुरङ्गनाः ।
नाविदन्नपि च नीविकां किमपि कुन्तलीमपि च कञ्चुलीं
ज्योतिषामपि कदम्बकं दिवि विलम्बितं किमपरं ब्रुवे ॥ ६९-८॥

मोदसीम्नि भुवनं विलाप्य विहृतिं समाप्य च ततो विभो
केलिसम्मृदितनिर्मलाङ्गनवघर्मलेशसुभगात्मनाम् ।
मन्मथासहनचेतसां पशुपयोषितां सुकृतचोदित-
स्तावदाकलितमूर्तिरादधिथ मारवीरपरमोत्सवान् ॥ ६९-९॥

केलिभेदपरिलोलिताभिरतिलालिताभिरबलालिभिः
स्वैरमीश ननु सूरजापयसि चारु नाम विहृतिं व्यधाः ।
काननेऽपि च विसारिशीतलकिशोरमारुतमनोहरे
सूनसौरभमये विलेसिथ विलासिनीशतविमोहनम् ॥ ६९-१०॥

कामिनीरिति हि यामिनीषु खलु कामनीयकनिधे भवान्
पूर्णसम्मदरसार्णवं कमपि योगिगम्यमनुभावयन् ।
ब्रह्मशङ्करमुखानपीह पशुपाङ्गनासु बहुमानयन्
भक्तलोकगमनीयरूप कमनीय कृष्ण परिपाहि माम् ॥ ६९-११॥

इति एकोनसप्ततितमदशकं समाप्तं

## सप्ततितमदशकम् (७०)

## सुदर्शनशापमोक्षं तथा शङ्खचूड-अरिष्टवधम् ।

## 70 - Salvation of Sudarsana And Slaying of Shankhachuda And Arishta

इति त्वयि रसाकुलं रमितवल्लभे वल्लवाः
कदापि पुनरम्बिकाकमितुरम्बिकाकानने ।
समेत्य भवता समं निशि निषेव्य दिव्योत्सवं
सुखं सुषुपुरग्रसीद्व्रजपमुग्रनागस्तदा ॥ ७०-१॥

समुन्मुखमथोल्मुकैरभिहतेऽपि तस्मिन्बला-
दमुञ्चति भवत्पदे न्यपति पाहि पाहीति तैः ।
तदा खलु पदा भवान्समुपगम्य पस्पर्श तं
बभौ स च निजां तनुं समुपसाद्य वैद्याधरीम् ॥ ७०-२॥

सुदर्शनधर प्रभो ननु सुदर्शनाख्योऽस्म्यहं
मुनीन्क्वचिदपाहसं त इह मां व्यधुर्वाहसम् ।
भवत्पदसमर्पणादमलतां गतोऽस्मीत्यसौ
स्तुवन्निजपदं ययौ व्रजपदं च गोपा मुदा ॥ ७०-३॥

कदापि खलु सीरिणा विहरति त्वयि स्त्रीजनै-

र्जहार धनदानुगः स किल शङ्खचूडोऽबलाः ।

अतिद्रुतमनुद्रुतस्तमथ मुक्तनारीजनं

रुरोजिथ शिरोमणिं हलभृते च तस्याददाः ॥ ७०-४॥

दिनेषु च सुहृज्जनैः सह वनेषु लीलापरं

मनोभवमनोहरं रसितवेणुनादामृतम् ।

भवन्तममरीदृशाममृतपारणादायिनं

विचिन्त्य किमु नालपन् विरहतापिता गोपिकाः ॥ ७०-५॥

भोजराजभृतकस्त्वथ कश्चित्कष्टदुष्टपथदृष्टिररिष्टः ।

निष्ठुराकृतिरपष्ठुनिनादस्तिष्ठते स्म भवते वृषरूपी ॥ ७०-६॥

शाक्वरोऽथ जगतीधृतिहारी मूर्तिमेष बृहतीं प्रदधानः ।

पङ्क्तिमाशु परिघूर्ण्य पशूनां छन्दसां निधिमवाप भवन्तम् ॥ ७०-७॥

तुङ्गश‍ृङ्गमुखमाश्वभियन्तं सङ्गृह्य्य रभसादभियं तम् ।

भद्ररूपमपि दैत्यमभद्रं मर्दयन्नमदयः सुरलोकम् ॥ ७०-८॥

चित्रमद्य भगवन् वृषघातात्सुस्थिराजनि वृषस्थितिरुर्व्याम् ।

वर्धते च वृषचेतसि भूयान्मोद इत्यभिनुतोऽसि सुरैस्त्वम् ॥ ७०-९॥

औक्षकाणि परिधावत दूरं वीक्ष्यतामयमिहोक्षविभेदी ।

इत्थमात्तहसितैः सह गोपैर्गेहगस्त्वमव वातपुरेश ॥ ७०-१०॥

इति सप्ततितमदशकं समाप्तं

## एकसप्ततितमदशकम् (७१)

## केशी तथा व्योमासुरवधम् ।

## 71 - Slaying of Kesi And Vyomasura

यत्नेषु सर्वेष्वपि नावकेशी केशी स भोजेशितुरिष्टबन्धुः ।
त्वं सिन्धुजावाप्य इतीव मत्वा सम्प्राप्तवान्सिन्धुजवाजिरूपः ॥ ७१-१॥

गन्धर्वतामेष गतोऽपि रूक्षैर्नादैः समुद्वेजितसर्वलोकः ।
भवद्विलोकावधि गोपवाटीं प्रमर्द्य पापः पुनरापतत्त्वाम् ॥ ७१-२॥

तार्क्ष्यार्पिताङ्घ्रेस्तव तार्क्ष्य एष चिक्षेप वक्षोभुवि नाम पादम् ।
भृगोः पदाघातकथां निशम्य स्वेनापि शक्यं तदितीव मोहात् ॥ ७१-३॥

प्रवञ्चयन्नस्य खुराञ्चलं द्रागमुं च चिक्षेपिथ दूरदूरम् ।
सम्मूर्छितोऽपि ह्यतिमूर्छितेन क्रोधोष्मणा खादितुमाद्रुतस्त्वाम् ॥ ७१-४॥

त्वं वाहदण्डे कृतधीश्च बाहादण्डं न्यधास्तस्य मुखे तदानीम् ।
तद्वृद्धिरुद्धश्वसनो गतासुः सप्तीभवन्नप्ययमैक्यमागात् ॥ ७१-५॥

आलम्भमात्रेण पशोः सुराणां प्रसादके नूत्न इवाश्वमेधे ।
कृते त्वया हर्षवशात्सुरेन्द्रास्त्वां तुष्टुवुः केशवनामधेयम् ॥ ७१-६॥

कंसाय ते शौरिसुतत्वमुक्त्वा तं तद्वधोत्कं प्रतिरुध्य वाचा ।
प्राप्तेन केशिक्षपणावसाने श्रीनारदेन त्वमभिष्टुतोऽभूः ॥ ७१-७॥

कदापि गोपैः सह काननान्ते निलायनक्रीडनलोलुपं त्वाम् ।
मयात्मजः प्राप दुरन्तमायो व्योमाभिधो व्योमचरोपरोधी ॥ ७१-८॥

स चोरपालायितवल्लवेषु चोरायितो गोपशिशून्पशूंश्च ।
गुहासु कृत्वा पिदधे शिलाभिस्त्वया च बुद्ध्वा परिमर्दितोऽभूत् ॥ ७१-९॥

एवंविधैश्चाद्भुतकेलिभेदैरानन्दमूर्छामतुलां व्रजस्य ।
पदे पदे नूतनयन्नसीमां परात्मरूपिन् पवनेशपायाः ॥ ७१-१०॥

इति एकचत्वारिंशदशकं समाप्तम् ।

## द्विसप्ततितमदशकम् (७२)

## अक्रूरगोकुलयात्रा ।

## 72 - Akrura's Journey To Gokula

कंसोऽथ नारदगिरा व्रजवासिनं त्वा-

माकर्ण्य दीर्णहृदयः स हि गान्दिनेयम् ।

आहूय कार्मुकमखच्छलतो भवन्त-

मानेतुमेनमहिनोदहिनाथशायिन् ॥ ७२-१॥

अक्रूर एष भवदङ्घ्रिपरश्चिराय

त्वद्दर्शनाक्षममनाः क्षितिपालभीत्या ।

तस्याज्ञयैव पुनरीक्षितुमुद्यतस्त्वा-

मानन्दभारमतिभूरितरं बभार ॥ ७२-२॥

सोऽयं रथेन सुकृती भवतो निवासं

गच्छन्मनोरथगणांस्त्वयि धार्यमाणान् ।

आस्वादयन्मुहुरपायभयेन दैवं

सम्प्रार्थयन्पथि न किञ्चिदपि व्यजानात् ॥ ७२-३॥

द्रक्ष्यामि वेदशतगीतगतिं पुमांसं

स्प्रक्ष्यामि किंस्विदपिनाम परिष्वजेयम् ।

किं वक्ष्यते स खलु मां क्वनु वीक्षितः स्या-

दित्थं निनाय स भवन्मयमेव मार्गम् ॥ ७२-४॥

भूयः क्रमादभिविशन्भवदङ्घ्रिपूतं

वृन्दावनं हरविरिञ्चसुराभिवन्द्यम् ।३२

आनन्दमग्न इव लग्न इव प्रमोहे

किं किं दशान्तरमवाप न पङ्कजाक्ष ॥ ७२-५॥

पश्यन्नवन्दत भवद्विहृतिस्थलानि
पांसुष्ववेष्टत भवच्चरणाङ्कितेषु ।
किं ब्रूमहे बहुजना हि तदापि जाता
एवं तु भक्तितरला विरलाः परात्मन् ॥ ७२-६॥

सायं स गोपभवनानि भवच्चरित्र-
गीतामृतप्रसृतकर्णरसायनानि ।
पश्यन्प्रमोदसरिदेव किलोह्यमानो
गच्छन्भवद्भवनसन्निधिमन्वयासीत् ॥ ७२-७॥

तावद्ददर्श पशुदोहविलोकलोलं
भक्तोत्तमागतिमिव प्रतिपालयन्तम् ।
भूमन् भवन्तमयमग्रजवन्तमन्त-
र्ब्रह्मानुभूतिरससिन्धुमिवोद्वमन्तम् ॥ ७२-८॥

सायन्तनाप्लवविशेषविविक्तगात्रौ
द्वौ पीतनीलरुचिराम्बरलोभनीयौ ।
नातिप्रपञ्चधृतभूषणचारुवेषौ
मन्दस्मितार्द्रवदनौ स युवां ददर्श ॥ ७२-९॥

दूराद्रथात्समवरुह्य नमन्तमेन-

मुत्थाप्य भक्तकुलमौलिमथोपगूहन् ।
हर्षान्मिताक्षरगिरा कुशलानुयोगी
पाणिं प्रगृह्य सबलोऽथ गृहं निनेथ ॥ ७२-१०॥

नन्देन साकममितादरमर्चयित्वा
तं यादवं तदुदितां निशमय्य वार्ताम् ।
गोपेषु भूपतिनिदेशकथां निवेद्य
नानाकथाभिरिह तेन निशामनैषीः ॥ ७२-११॥

चन्द्रागृहे किमुत चन्द्रभगागृहे नु
राधागृहे नु भवने किमु मैत्रविन्दे ।
धूर्त्तो विलम्बत इति प्रमदाभिरुच्चै-
राशङ्कितो निशि मरुत्पुरनाथ पायाः ॥ ७२-१२॥

इति द्विसप्ततितमदशकं समाप्तम् ।

त्रिसप्ततितमदशकम् (७३)

श्रीकृष्णस्य मथुरायात्रा ।

## 73 - The Lord Leaving For Mathura

निशमय्य तवाथ यानवार्तां भृशमार्ताः पशुपालबालिकास्ताः ।
किमिदं किमिदं कथन्वितीमाः समवेताः परिदेवितान्यकुर्वन् ॥ ७३-१॥

करुणानिधिरेष नन्दसूनुः कथमस्मान्विसृजेदनन्यनाथाः ।

बत नः किमु दैवमेवमासीदिति तास्त्वद्गतमानसा विलेपुः ॥ ७३-२॥

चरमप्रहरे प्रतिष्ठमानः सह पित्रा निजमित्रमण्डलैश्च ।

परितापभरं नितम्बिनीनां शमयिष्यन् व्यमुचस्सखायमेकम् ॥ ७३-३॥

अचिरादुपयामि सन्निधिं वो भविता साधु मयैव सङ्गमश्रीः ।

अमृताम्बुनिधौ निमज्जयिष्ये द्रुतमित्याश्वसिता वधूरकार्षीः ॥ ७३-४॥

सविषादभरं सयाच्ञमुच्चैरतिदूरं वनिताभिरीक्ष्यमाणः ।

मृदु तद्दिशि पातयन्नपाङ्गान् सबलोऽक्रूररथेन निर्गतोऽभूः ॥ ७३-५॥

अनसा बहुलेन वल्लवानां मनसा चनुगतोऽथ वल्लभानाम् ।

वनमार्तमृगं विषण्णवृक्षं समतीतो यमुनातटीमयासीः ॥ ७३-६॥

नियमाय निमज्य वारिणि त्वामभिवीक्ष्याथ रथेऽपि गान्दिनेयः ।

विवशोऽजनि किन्विदं विभोस्ते ननु चित्रं त्ववलोकनं समन्तात् ॥ ७३-७॥

पुनरेष निमज्य पुण्यशाली पुरुषं त्वां परमं भुजङ्गभोगे ।

अरिकम्बुगदाम्बुजैः स्फुरन्तं सुरसिद्धौघपरीतमालुलोके ॥ ७३-८॥

स तदा परमात्मसौख्यसिन्धौ विनिमग्नः प्रणुवन्प्रकारभेदैः ।

अविलोक्य पुनश्च हर्षसिन्धोरनुवृत्या पुलकावृतो ययौ त्वाम् ॥ ७३-९॥

किमु शीतलिमा महान् जले यत्पुलकोऽसाविति चोदितेन तेन ।
अतिहर्षनिरुत्तरेण सार्धं रथवासी पवनेश पाहि मां त्वम् ॥ ७३-१०॥

इति त्रिसप्ततितमदशकं समाप्तम् ।

## चतुःसप्ततितमदशकम् (७४)

### भगवतः मथुरापुरीप्रवेशम् ।

### 74 - Entry of the Lord Into Mathura

सम्प्राप्तो मथुरां दिनार्धविगमे तत्रान्तरस्मिन्वस-
न्नारामे विहिताशनः सखिजनैर्यातः पुरीमीक्षितुम् ।
प्रापो राजपथं चिरश्रुतिधृतव्यालोककौतूहल-
स्त्रीपुंसोद्यदगण्यपुण्यनिगलैराकृष्यमाणो नु किम् ॥ ७४-१॥

त्वत्पादद्युतिवत्सरागसुभगास्त्वन्मूर्तिवद्योषितः
सम्प्राप्ता विलसत्पयोधररुचो लोला भवद्दृष्टिवत् ।
हारिण्यस्त्वदुरस्स्थलीवदयि ते मन्दस्मितप्रौढिव-
न्नैर्मल्योल्लसिताः कचौघरुचिवद्राजत्कलापाश्रिताः ॥ ७४-२॥

तासामाकलयन्नपाङ्गवलनैर्मोदं प्रहर्षाद्भुत-

व्यालोलेषु जनेषु तत्र रजकं कश्चित्पटीं प्रार्थयन् ।
कस्ते दास्यति राजकीयवसनं याहीति तेनोदितः
सद्यस्तस्य करेण शीर्षमहृथाः सोऽप्याप पुण्यां गतिम् ॥ ७४-३॥

भूयो वायकमेकमायतमतिं तोषेण वेषोचितं
दाश्वांसं स्वपदं निनेथ सुकृतं को वेद जीवात्मनाम् ।
मालाभिः स्तबकैः स्तवैरपि पुनर्मालाकृता मानितो
भक्तिं तेन वृतां दिदेशिथ परां लक्ष्मीं च लक्ष्मीपते ॥ ७४-४॥

कुब्जामब्जविलोचनां पथि पुनर्दृष्ट्वाङ्गरागे तया
दत्ते साधु किलाङ्गरागमददास्तस्या महान्तं हृदि ।
चित्तस्थामृजुतामथ प्रथयितुं गात्रेऽपि तस्याः स्फुटं
गृह्णन्मञ्जुकरेण तामुदनयस्तावज्जगत्सुन्दरीम् ॥ ७४-५॥

तावन्निश्चितवैभवास्तव विभो नात्यन्तपापा जना
यत्किञ्चिद्ददते स्म शक्त्यनुगुणं ताम्बूलमाल्यादिकम् ।
गृह्णानः कुसुमादि किञ्चन तदा मार्गे निबद्धाञ्जलि-
र्नातिष्ठं बत हा यतोऽद्य विपुलामार्तिं व्रजामि प्रभो ॥ ७४-६॥

एष्यामीति विमुक्तयापि भगवन्नालेपदात्र्या तया
दूरात्कातरया निरीक्षितगतिस्त्वं प्राविशो गोपुरम् ।
आघोषानुमितत्वदागममहाहर्षोल्ललद्देवकी-
वक्षोजप्रगलत्पयोरसमिषात्त्वत्कीर्तिरन्तर्गता ॥ ७४-७॥

आविष्टो नगरीं महोत्सववतीं कोदण्डशालां व्रजन्
माधुर्येण नु तेजसा नु पुरुषैर्दूरेण दत्तान्तरः ।
स्रग्भिर्भूषितमर्चितं वरधनुर्मामेति वादात्पुरः
प्रागृह्णाः समरोपयः किल समाक्राक्षीरभाङ्क्षीरपि ॥ ७४-८॥ ३ ३

श्वः कंसक्षपणोत्सवस्य पुरतः प्रारम्भतूर्योपम-
श्चापध्वंसमहाध्वनिस्तव विभो देवानरोमाञ्चयत् ।
कंसस्यापि च वेपथुस्तदुदितः कोदण्डखण्डद्वयी-
चण्डाभ्याहतरक्षिपूरुषरवैरुत्कूलितोऽभूत्त्वया ॥ ७४-९॥

शिष्टैर्दुष्टजनैश्च दृष्टमहिमा प्रीत्या च भीत्या ततः
सम्पश्यन्पुरसम्पदं प्रविचरन्सायं गतो वाटिकाम् ।
श्रीदाम्ना सह राधिकाविरहजं खेदं वदन्प्रस्वप-
न्नानन्दन्नवतारकार्यघटनाद्वातेश संरक्ष माम् ॥ ७४-१०॥

इति चतुःसप्ततितमदशकं समाप्तम् ।

## पञ्चसप्ततितमदशकम् (७५)

## कंसवधम् ।

## 75 - Slaying of Kamsa

प्रातः सन्त्रस्तभोजक्षितिपतिवचसा प्रस्तुते मल्लतूर्ये
सङ्घे राज्ञां च मञ्चानभिययुषि गते नन्दगोपेऽपि हर्म्यम् ।
कंसे सौधाधिरूढे त्वमपि सहबलः सानुगश्चारुवेषो
रङ्गद्वारं गतोऽभूः कुपितकुवलयापीडनागावलीढम् ॥ ७५-१॥

पापिष्ठापेहि मार्गाद्द्रुतमिति वचसा निष्ठुरक्रुद्धबुद्धे-
रम्बष्ठस्य प्रणोदादधिकजवजुषा हस्तिना गृह्यमाणः ।
केलीमुक्तोऽथ गोपीकुचकलशचिरस्पर्धिनं कुम्भमस्य
व्याहत्यालीयथास्त्वं चरणभुवि पुनर्निर्गतो वल्गुहासी ॥ ७५-२॥

हस्तप्राप्योऽप्यगम्यो झटिति मुनिजनस्येव धावन्गजेन्द्रं
क्रीडन्नापत्य भूमौ पुनरभिपततस्तस्य दन्तं सजीवम् ।
मूलादुन्मूल्य तन्मूलगमहितमहामौक्तिकान्यात्ममित्रे
प्रादास्त्वं हारमेभिर्ललितविरचितं राधिकायै दिशेति ॥ ७५-३॥

गृह्णानं दन्तमंसे युतमथ हलिना रङ्गमङ्गाविशन्तं
त्वां मङ्गल्याङ्गभङ्गीरभसहृतमनोलोचना वीक्ष्य लोकाः ।
हंहो धन्यो नु नन्दो न हि न हि पशुपालाङ्गना नो यशोदा
नो नो धन्येक्षणाः स्मस्त्रिजगति वयमेवेति सर्वे शशंसुः ॥ ७५-४॥

पूर्णं ब्रह्मैव साक्षान्निरवधिपरमानन्दसान्द्रप्रकाशं
गोपेषु त्वं व्यलासीर्न खलु बहुजनैस्तावदावेदितोऽभूः ।
दृष्ट्वाथ त्वां तदेदम्प्रथममुपगते पुण्यकाले जनौघाः

पूर्णानन्दा विपापाः सरसमभिजगुस्त्वत्कृतानि स्मृतानि ॥ ७५-५॥

चाणूरो मल्लवीरस्तदनु नृपगिरा मुष्टिको मुष्टिशाली
त्वां रामं चाभिपेदे झटझटिति मिथो मुष्टिपातातिरूक्षम् ।
उत्पातापातनाकर्षणविविधरणान्यासतां तत्र चित्रं
मृत्योः प्रागेव मल्लप्रभुरगमदयं भूरिशो बन्धमोक्षान् ॥ ७५-६॥

हा धिक्कष्टं कुमारौ सुललितवपुषौ मल्लवीरौ कठोरौ
न द्रक्ष्यामो व्रजामस्त्वरितमिति जने भाषमाणे तदानीम् ।
चाणूरं तं करोद्भ्रामणविगलदसुं पोथयामासिथोर्व्यां
पिष्टोऽभून्मुष्टिकोऽपि द्रुतमथ हलिना नष्टशिष्टैर्दधावे ॥ ७५-७॥

कंसस्संवार्य तूर्यं खलमतिरविदन्कार्यमार्यान् पितॄंस्ता-
नाहन्तुं व्याप्तमूर्तेस्तव च समशिषद्दूरमुत्सारणाय ।
रुष्टो दुष्टोक्तिभिस्त्वं गरुड इव गिरिं मञ्चमञ्चन्नुदञ्चत्
खड्गव्यावल्गदुस्सङ्ग्रहमपि च हठात्प्राग्रहीरौग्रसेनिम् ॥ ७५-८॥

सद्यो निष्पिष्टसन्धिं भुवि नरपतिमापात्य तस्योपरिष्टात्
त्वय्यापात्ये तदैव त्वदुपरि पतिता नाकिनां पुष्पवृष्टिः ।
किं किं ब्रूमस्तदानीं सततमपि भिया त्वद्गतात्मा स भेजे
सायुज्यं त्वद्वधोत्था परम परमियं वासना कालनेमेः ॥ ७५-९॥

तद्भ्रातॄनष्ट पिष्ट्वा द्रुतमथ पितरौ सन्नमन्नुग्रसेनं

कृत्वा राजानमुच्चैर्यदुकुलमखिलं मोदयन्कामदानैः ।
भक्तानामुत्तमं चोद्धवममरगुरोराप्तनीतिं सखायं
लब्ध्वा तुष्टो नगर्यां पवनपुरपते रुन्धि मे सर्वरोगान् ॥ ७५-१०॥

इति पञ्चसप्ततितमदशकं समाप्तम् ।

षट्सप्ततितमदशकम् (७६)

उद्धवदौत्यम् ।

## 76 - Uddhava Sent As A Messenger To the Gopikas

गत्वा सान्दीपनिमथ चतुष्षष्टिमात्रैरहोभिः
सर्वज्ञस्त्वं सह मुसलिना सर्वविद्यां गृहीत्वा ।
पुत्रं नष्टं यमनिलयनादाहृतं दक्षिणार्थं
दत्त्वा तस्मै निजपुरमगा नादयन्पाञ्चजन्यम् ॥ ७६-१॥

स्मृत्वा स्मृत्वा पशुपसुदृशः प्रेमभारप्रणुन्नाः
कारुण्येन त्वमपि विवशः प्रहिणोरुद्धवं तम् ।
किञ्चामुष्मै परमसुहृदे भक्तवर्याय तासां
भक्त्युद्रेकं सकलभुवने दुर्लभं दर्शयिष्यन् ॥ ७६-२॥

त्वन्माहात्म्यप्रथिमपिशुनं गोकुलं प्राप्य सायं
त्वद्वार्ताभिर्बहु स रमयामास नन्दं यशोदाम् ।

प्रातर्दृष्ट्वा मणिमयरथं शङ्किताः पङ्कजाक्ष्यः
श्रुत्वा प्राप्तं भवदनुचरं त्यक्तकार्याः समीयुः ॥ ७६-३॥

दृष्ट्वा चैनं त्वदुपमलसद्वेषभूषाभिरामं
स्मृत्वा स्मृत्वा तव विलसितान्युच्चकैस्तानि तानि ।
रुद्धालापाः कथमपि पुनर्गद्गदां वाचमूचुः
सौजन्यादीन्निजपरभिदामप्यलं विस्मरन्त्यः ॥ ७६-४॥

श्रीमन् किं त्वं पितृजनकृते प्रेषितो निर्दयेन
क्वासौ कान्तो नगरसुदृशां हा हरे नाथ पायाः ।
आश्लेषाणाममृतवपुषो हन्त ते चुम्बनाना-
मुन्मादानां कुहकवचसां विस्मरेत्कान्त का वा ॥ ७६-५॥

रासक्रीडालुलितललितं विश्लथत्केशपाशं
मन्दोद्भिन्नश्रमजलकणं लोभनीयं त्वदङ्गम् ।
कारुण्याब्धे सकृदपि समालिङ्गितुं दर्शयेति
प्रेमोन्मादाद्भुवनमदन त्वत्प्रियास्त्वां विलेपुः ॥ ७६-६॥

एवं प्रायैर्विवशवचनैराकुला गोपिकास्ताः
त्वत्सन्देशैः प्रकृतिमनयत्सोऽथ विज्ञानगर्भैः ।
भूयस्ताभिर्मुदितमतिभिस्त्वन्मयीभिर्वधूभि-
स्तत्तद्वार्तासरसमनयत्कानिचिद्वासराणि ॥ ७६-७॥

त्वत्प्रोद्गानैः सहितमनिशं सर्वतो गेहकृत्यं
त्वद्वार्तैव प्रसरति मिथः सैव चोत्स्वापलापाः ।
चेष्टाः प्रायस्त्वदनुकृतयस्त्वन्मयं सर्वमेवं
दृष्ट्वा तत्र व्यमुहदधिकं विस्मयादुद्धवोऽयम् ॥ ७६-८॥

राधाया मे प्रियतममिदं मत्प्रियैवं ब्रवीति
त्वं किं मौनं कलयसि सखे मानिनी मत्प्रियेव ।
इत्याद्येव प्रवदति सखि त्वत्प्रियो निर्जने मा-
मित्थंवादैररमयदयं त्वत्प्रियामुत्पलाक्षीम् ॥ ७६-९॥

एष्यामि द्रागनुपगमनं केवलं कार्यभाराद्-
विश्लेषेऽपि स्मरणदृढतासम्भवान्मास्तु खेदः ।
ब्रह्मानन्दे मिलति नचिरात्सङ्गमो वा वियोग-
स्तुल्यो वः स्यादिति तव गिरा सोऽकरोन्निर्व्यथास्ताः ॥ ७६-१०॥

एवं भक्तिः सकलभुवने नेक्षिता न श्रुता वा
किं शास्त्रौघैः किमिह तपसा गोपिकाभ्यो नमोऽस्तु ।
इत्यानन्दाकुलमुपगतं गोकुलादुद्धवं तं
दृष्ट्वा हृष्टो गुरुपुरपते पाहि मामामयौघात् ॥ ७६-११॥

इति षट्सप्ततितमदशकं समाप्तं

सप्तसप्ततितमदशकम् (७७)

जरासन्धादिभिः सह युद्धम् ।

77 - Fight Against Jarasandha And Others

सैरन्ध्यास्तदनु चिरं स्मरातुराया

यातोऽभूः सललितमुद्धवेन सार्धम् ।

आवासं त्वदुपगमोत्सवं सदैव

ध्यायन्त्याः प्रतिदिनवाससज्जिकायाः ॥ ७७-१॥

उपगते त्वयि पूर्णमनोरथां

प्रमदसम्भ्रमकम्प्रपयोधराम् ।

विविधमाननमादधतीं मुदा

रहसि तां रमयाञ्चकृषे सुखम् ॥ ७७-२॥

पृष्टा वरं पुनरसाववृणोद्वराकी

भूयस्त्वया सुरतमेव निशान्तरेषु ।

सायुज्यमस्त्विति वदेद्बुध एव कामं

सामीप्यमस्त्वनिशमित्यपि नाब्रवीत्किम् ॥ ७७-३॥

ततो भवान्देव निशासु कासुचिन्मृगीदृशं तां निभृतं विनोदयन् ।

अदादुपश्लोक इति श्रुतं सुतं स नारदात्सात्त्वततन्त्रविद्बभौ ॥ ७७-४॥

अक्रूरमन्दिरमितोऽथ बलोद्धवाभ्या-

मभ्यर्चितो बहु नुतो मुदितेन तेन ।
एनं विसृज्य विपिनागतपाण्डवेय-
वृत्तं विवेदिथ तथा धृतराष्ट्रचेष्टाम् ॥ ७७-५॥

विघाताज्जामातुः परमसुहृदो भोजनृपते-
र्जरासन्धे रुन्धत्यनवधिरुषान्धेऽथ मथुराम् ।
रथाद्यैर्द्योर्लब्धैः कतिपयबलस्त्वं बलयुत-३४
स्त्रयोविंशत्यक्षौहिणि तदुपनीतं समहृथाः ॥ ७७-६॥

बद्धं बलादथ बलेन बलोत्तरं त्वं
भूयो बलोद्यमरसेन मुमोचिथैनम् ।
निश्शेषदिग्जयसमाहृतविश्वसैन्यात्
कोऽन्यस्ततो हि बलपौरुषवांस्तदानीम् ॥ ७७-७॥

भग्नस्स लग्नहृदयोऽपि नृपैः प्रणुन्नो
युद्धं त्वया व्यधित षोडशकृत्व एवम् ।
अक्षौहिणीः शिव शिवास्य जघन्थ विष्णो
सम्भूय सैकनवतित्रिशतं तदानीम् ॥ ७७-८॥

अष्टादशेऽस्य समरे समुपेयुषि त्वं
दृष्ट्वा पुरोऽथ यवनं यवनत्रिकोट्या ।
त्वष्ट्रा विधाप्य पुरमाशु पयोधिमध्ये
तत्राथ योगबलतः स्वजनाननैषीः ॥ ७७-९॥

पद्भ्यां त्वं पद्ममाली चकित इव पुरान्निर्गतो धावमानो
म्लेच्छेशेनानुयातो वधसुकृतविहीनेन शैले न्यलैषीः ।
सुप्तेनाङ्घ्र्याहतेन द्रुतमथ मुचुकुन्देन भस्मीकृतेऽस्मिन्
भूपायास्मै गुहान्ते सुललितवपुषा तस्थिषे भक्तिभाजे ॥ ७७-१०॥

ऐक्ष्वाकोऽहं विरक्तोऽस्म्यखिलनृपसुखे त्वत्प्रसादैककाङ्क्षी
हा देवेति स्तुवन्तं वरवितितिषु तं निस्पृहं वीक्ष्य हृष्यन् ।
मुक्तेस्तुल्यां च भक्तिं धुतसकलमलं मोक्षमप्याशु दत्त्वा
कार्यं हिंसाविशुद्ध्यै तप इति च तदा प्रास्थ लोकप्रतीत्यै ॥ ७७-११॥

तदनु मथुरां गत्वा हत्वा चमूं यवनाहृतां
मगधपतिना मार्गे सैन्यैः पुरेव निवारितः ।
चरमविजयं दर्पायास्मै प्रदाय पलायितो
जलधिनगरीं यातो वातालयेश्वर पाहि माम् ॥ ७७-१२॥

इति सप्तसप्ततितमदशकं समाप्तं

अष्टसप्ततितमदशकम् (७८)

द्वारकावासः तथा रुक्मणीसन्देशप्राप्तिः ।

**78 - Rukmini Swayamvaram**

त्रिदशवर्धकिवर्धितकौशलं त्रिदशदत्तसमस्तविभूतिमत् ।
जलधिमध्यगतं त्वमभूषयो नवपुरं वपुरञ्चितरोचिषा ॥ ७८-१॥

ददुषि रेवतभूभृति रेवतीं हलभृते तनयां विधिशासनात् ।
महितमुत्सवघोषमपूपुषः समुदितैर्मुदितैः सह यादवैः ॥ ७८-२॥

अथ विदर्भसुतां खलु रुक्मिणीं प्रणयिनीं त्वयि देव सहोदरः ।
स्वयमदित्सत चेदिमहीभुजे स्वतमसा तमसाधुमुपाश्रयन् ॥ ७८-३॥

चिरधृतप्रणया त्वयि बालिका सपदि काङ्क्षितभङ्गसमाकुला ।
तव निवेदयितुं द्विजमादिशत्स्वकदनं कदनङ्गविनिर्मितम् ॥ ७८-४॥

द्विजसुतोऽपि च तूर्णमुपाययौ तव पुरं हि दुराशदुरासदम् ।
मुदमवाप च सादरपूजितः स भवता भवतापहृता स्वयम् ॥ ७८-५॥

स च भवन्तमवोचत कुण्डिने नृपसुता खलु राजति रुक्मिणी ।
त्वयि समुत्सुकया निजधीरतारहितया हि तया प्रहितोऽस्म्यहम् ॥ ७८-६॥

तव हृतास्मि पुरैव गुणैरहं हरति मां किल चेदिनृपोऽधुना ।
अयि कृपालय पालय मामिति प्रजगदे जगदेकपते तया ॥ ७८-७॥

अशरणां यदि मां त्वमुपेक्षसे सपदि जीवितमेव जहाम्यहम् ।
इति गिरा सुतनोरतनोद्भृशं सुहृदयं हृदयं तव कातरम् ॥ ७८-८॥

अकथयस्त्वमथैनमये सखे तदधिका मम मन्मथवेदना ।
नृपसमक्षमुपेत्य हराम्यहं तदयि तां दयितामसितेक्षणाम् ॥ ७८-९॥

प्रमुदितेन च तेन समं तदा रथगतो लघु कुण्डिनमेयिवान् ।
गुरुमरुत्पुरनायक मे भवान्वितनुतां तनुतामखिलापदाम् ॥ ७८-१०॥

इति अष्टसप्ततितमदशकं समाप्तम् ।

एकोनाशीतितम दशकम् (७९)

रुक्मिणीहरणं-विवाहम् ।

79 - Rukmini Haranam and Kalyanam

बलसमेतबलानुगतो भवान् पुरमगाहत भीष्मकमानितः ।
द्विजसुतं त्वदुपागमवादिनं धृतरसा तरसा प्रणनाम सा ॥ ७९-१॥

भुवनकान्तमवेक्ष्य भवद्वपुर्नृपसुतस्य निशम्य च चेष्टितम् ।
विपुलखेदजुषां पुरवासिनां सरुदितैरुदितैरगमन्निशा ॥ ७९-२॥

तदनु वन्दितुमिन्दुमुखी शिवां विहितमङ्गलभूषणभासुरा ।
निरगमद्भवदर्पितजीविता स्वपुरतः पुरतः सुभटावृता ॥ ७९-३॥

कुलवधूभिरुपेत्य कुमारिका गिरिसुतां परिपूज्य च सादरम् ।
मुहुरयाचत तत्पदपङ्कजे निपतिता पतितां तव केवलम् ॥ ७९-४॥

समवलोककुतूहलसङ्कुले नृपकुले निभृतं त्वयि च स्थिते ।
नृपसुता निरगाद्गिरिजालयात्सुरुचिरं रुचिरञ्जितदिङ्मुखा ॥ ७९-५॥

भुवनमोहनरूपरुचा तदा विवशिताखिलराजकदम्बया ।
त्वमपि देव कटाक्षविमोक्षणैः प्रमदया मदयाञ्चकृषे मनाक् ॥ ७९-६॥

क्व नु गमिष्यसि चन्द्रमुखीति तां सरसमेत्य करेण हरन् क्षणात् ।
समधिरोप्य रथं त्वमपाहृथा भुवि ततो विततो निनदो द्विषाम् ॥ ७९-७॥

क्व नु गतः पशुपाल इति क्रुधा कृतरणा यदुभिश्च जिता नृपाः ।
न तु भवानुदचाल्यत तैरहो पिशुनकैः शुनकैरिव केसरी ॥ ७९-८॥

तदनु रुक्मिणमागतमाहवे वधमुपेक्ष्य निबध्य विरूपयन् ।
हृतमदं परिमुच्य बलोक्तिभिः पुरमया रमया सह कान्तया ॥ ७९-९॥

नवसमागमलज्जितमानसां प्रणयकौतुकजृम्भितमन्मथाम् ।
अरमयः खलु नाथ यथासुखं रहसि तां हसितांशुलसन्मुखीम् ॥ ७९-१०॥

विविधनर्मभिरेवमहर्निशं प्रमदमाकलयन्पुनरेकदा ।
ऋजुमतेः किल वक्रगिरा भवान् वरतनोरतनोदतिलोलताम् ॥ ७९-११॥

तदधिकैरथ लालनकौशलैः प्रणयिनीमधिकं रमयन्निमाम् ।

अयि मुकुन्द भवच्चरितानि नः प्रगदतां गदतान्तिमपाकुरु ॥ ७९-१२॥

इति एकोनाशीतितमदशकं समाप्तं

## अशीतितमदशकम् (८०)

### स्यमन्तकोपाख्यानम् ।

### 80 - Story of the Syamantaka Jewel

सत्राजितस्त्वमथ लुब्धवदर्कलब्धं
दिव्यं स्यमन्तकमणिं भगवन्नयाचीः ।
तत्कारणं बहुविधं मम भाति नूनं
तस्यात्मजां त्वयि रतां छलतो विवोढुम् ॥ ८०-१॥

अदत्तं तं तुभ्यं मणिवरमनेनाल्पमनसा
प्रसेनस्तद्भ्राता गलभुवि वहन्प्राप मृगयाम् ।
अहन्नेनं सिंहो मणिमहसि मांसभ्रमवशात्
कपीन्द्रस्तं हत्वा मणिमपि च बालाय ददिवान् ॥ ८०-२॥

शशंसुः सत्राजिद्गिरमनु जनास्त्वां मणिहरं
जनानां पीयूषं भवति गुणिनां दोषकणिका ।

ततः सर्वज्ञोऽपि स्वजनसहितो मार्गणपरः

प्रसेनं तं दृष्ट्वा हरिमपि गतोऽभूः कपिगुहाम् ॥ ८०-३॥

भवन्तमवितर्कयन्नतिवयाः स्वयं जाम्बवान्

मुकुन्दशरणं हि मां क इह रोद्धुमित्यालपन् ।

विभो रघुपते हरे जय जयेत्यलं मुष्टिभि-

श्चिरं तव समर्चनं व्यधित भक्तचूडामणिः ॥ ८०-४॥

बुद्ध्वाथ तेन दत्तां नवरमणीं वरमणिं च परिगृह्णन् ।

अनुगृह्णन्नमुमागाः सपदि च सत्राजिते मणिं प्रादाः ॥ ८०-५॥

तदनु स खलु व्रीडालोलो विलोलविलोचनां

दुहितरमहो धीमान्भामां गिरैव परार्पिताम् ।

अदितमणिना तुभ्यं लभ्यं समेत्य भवानपि

प्रमुदितमनास्तस्यैवादान्मणिं गहनाशयः ॥ ८०-६॥

व्रीलाकुलां रमयति त्वयि सत्यभामां

कौन्तेयदाहकथयाथ कुरून्प्रयाते ।

हा गान्दिनेयकृतवर्मगिरा निपात्य

सत्राजितं शतधनुर्मणिमाजहार ॥ ८०-७॥

शोकात्कुरूनुपगतामवलोक्य कान्तां

हत्वा द्रुतं शतधुनं समहर्षयस्ताम् ।

रत्ने सशङ्क इव मैथिलगेहमेत्य
रामो गदां समशिशिक्षत धार्तराष्ट्रम् ॥ ८०-८॥

अक्रूर एष भगवन् भवदिच्छयैव
सत्राजितः कुचरितस्य युयोज हिंसाम् ।
अक्रूरतो मणिमनाहृतवान्पुनस्त्वं
तस्यैव भूतिमुपधातुमिति ब्रुवन्ति ॥ ८०-९॥

भक्तस्त्वयि स्थिरतरः स हि गान्दिनेय-
स्तस्यैव कापथमतिः कथमीश जाता ।
विज्ञानवान्प्रशमवानहमित्युदीर्णं
गर्वं ध्रुवं शमयितुं भवता कृतैव ॥ ८०-१०॥

यातं भयेन कृतवर्मयुतं पुनस्त-
माहूय तद्विनिहितं च मणिं प्रकाश्य ।
तत्रैव सुव्रतधरे विनिधाय तुष्यन्
भामाकुचान्तरशयः पवनेश पायाः ॥ ८०-११॥

इति अशीतितमदशकं समाप्तम् ।

## एकाशीतितमदशकम् (८१)

नरकासुरवधं तथा सुभद्राहरणम् ।

## 81 - Slaying of Narakasura And Abduction of Subhadra

स्निग्धां मुग्धां सततमपि तां लालयन् सत्यभामां
यातो भूयः सह खलु तया याज्ञसेनीविवाहम् ।
पार्थप्रीत्यै पुनरपि मनागास्थितो हस्तिपुर्यां
शक्रप्रस्थं पुरमपि विभो संविधायागतोऽभूः ॥ ८१-१॥

भद्रां भद्रां भवदवरजां कौरवेणार्थ्यमानां
त्वद्वाचा तामहृत कुहनामस्करी शक्रसूनुः ।
तत्र क्रुद्धं बलमनुनयन् प्रत्यगास्तेन सार्धं
शक्रप्रस्थं प्रियसखमुदे सत्यभामासहायः ॥ ८१-२॥

तत्र क्रीडन्नपि च यमुनाकूलदृष्टां गृहीत्वा
तां कालिन्दीं नगरमगमः खाण्डवप्रीणिताग्निः ।
भ्रातृत्रस्तां प्रणयविवशां देव पैतृष्वसेयीं
राज्ञां मध्ये सपदि जहृषे मित्रविन्दामवन्तीम् ॥ ८१-३॥

सत्यां गत्वा पुनरुदवहो नग्नजिन्नन्दनां तां
बध्वा सप्तापि च वृषवरान्सप्तमूर्तिर्निमेषात् ।
भद्रां नाम प्रददुरथ ते देव सन्तर्दनाद्या-
स्तत्सोदर्यां वरद भवतः सापि पैतृष्वसेयी ॥ ८१-४॥

पार्थाद्यैरप्यकृतलवनं तोयमात्राभिलक्ष्यं

लक्षं छित्वा शफरमवृथा लक्षणां मद्रकन्याम् ।
अष्टावेवं तव समभवन् वल्लभास्तत्र मध्ये
शुश्रोथ त्वं सुरपतिगिरा भौमदुश्चेष्टितानि ॥ ८१-५॥

स्मृतायातं पक्षिप्रवरमधिरूढस्त्वमगमो
वहन्नङ्के भामामुपवनमिवारातिभवनम् ।
विभिन्दन् दुर्गाणि त्रुटितपृतनाशोनितरसैः
पुरं तावत्प्राग्ज्योतिषमकुरुथाश्शोणितपुरम् ॥ ८१-६॥

मुरस्त्वां पञ्चास्यो जलधिवनमध्यादुदपतत्
स चक्रे चक्रेण प्रदलितशिरा मङ्क्षु भवता ।
चतुर्दन्तैर्दन्तावलपतिभिरिन्धानसमरं३५
रथाङ्केनच्छित्वा नरकमकरोस्तीर्णरकम् ॥ ८१-७॥

स्तुतो भूम्या राज्यं सपदि भगदत्तेऽस्य तनये
गजश्चैकं दत्त्वा प्रजिघायिथ नागान्निजपुरीम् ।
खलेनाबद्धानां स्वगतमनसां षोडश पुनः
सहस्राणि स्त्रीणामपि च धनराशिं च विपुलम् ॥ ८१-८॥

भौमापाहृतकुण्डलं तददितेर्दातुं प्रयातो दिवं
शक्राद्यैर्महितः समं दयितया द्युस्त्रीषु दत्तह्रिया ।
हृत्वा कल्पतरुं रुषाभिपतितं जित्वेन्द्रमभ्यागम-
स्तत्तु श्रीमददोष ईदृश इति व्याख्यातुमेवाकृथाः ॥ ८१-९॥

कल्पद्रुं सत्यभामाभवनभुवि सृजन्द्व्यष्टसाहस्रयोषाः
स्वीकृत्य प्रत्यगारं विहितबहुवपुर्लालयन्केलिभेदैः ।
आश्चर्यान्नारदालोकितविविधगतिस्तत्र तत्रापि गेहे
भूयः सर्वासु कुर्वन् दश दश तनयान् पाहि वातालयेश ॥ ८१-१०॥

इति एकाशीतितमदशकं समाप्तम् ।

## द्व्यशीतितमदशकम् (८२)

बाणासुरयुद्धं तथा नृगशापमोक्षम् ।

82 - Fight With Bana - Deliverence of Nriga

प्रद्युम्नो रौक्मिणेयः स खलु तव कला शम्बरेणाहृतस्तं
हत्वा रत्या सहाप्तो निजपुरमहरद्रुक्मिकन्यां च धन्याम् ।
तत्पुत्रोऽथानिरुद्धो गुणनिधिरवहद्रोचनां रुक्मिपौत्रीं
तत्रोद्वाहे गतस्त्वं न्यवधि मुसलिना रुक्म्यपि द्यूतवैरात् ॥ ८२-१॥

बाणस्य सा बलिसुतस्य सहस्रबाहो-
र्माहेश्वरस्य महिता दुहिता किलोषा ।
त्वत्पौत्रमेनमनिरुद्धमदृष्टपूर्वं
स्वप्नेऽनुभूय भगवन् विरहातुराऽभूत् ॥ ८२-२॥

